आ । तु । अद्य । सधऽस्तुतिं । ववातुः । सख्युः । आ । गहि ।

उपऽस्तुतः । मघोनां । प्र । त्वा । अवतु । अधं । ते । वश्मि ।

सुऽस्तुतिं ॥ १६

हे इंद्र ववातुः सं भक्तुः त्वां सेवमानस्य सख्युः स्तोतुः सधस्तुतिमन्यैः ऋत्विग्भिः सह क्रियमाणां स्तुतिमद्येदानीं तु क्षिप्रमागहि । आगच्छ । मघोनां हविष्मता- मन्येषामपि यजमानानामुपस्तुभिः स्तोतं त्वा त्वां प्रावतु । प्रगच्छतु । प्रतर्पयतु वा । अधाधुना सुष्टुतिं द्विषयां शोभनां स्तुतिमहमपि वश्मि । कामये ॥

॥ अथ सप्तदशी ॥

सोता हि सोममद्रिभिरेमेनमप्सु धावत ।

गव्या वस्त्रेव वासयंत इन्नरो निर्धुक्षन्वक्षणाभ्यः ॥ १७

सोत । हि । सोमं । अद्रिऽभिः । आ । ईं । एनं । अप्ऽसु । धावत ।

गव्या । वस्त्राऽइव । वासयंत । इत् । नरः । निः । धुक्षन् । वक्षणाभ्यः ॥ १७

हे अध्वर्यवोऽद्रिभिर्ग्रावभिः सोमं सोत । हिरवधारणे । अभिषुणुतैव ॥ एन- मिममप्सु वसतीवरीष्वाधावत । कर्म्मसोमस्य शवनं कुरुत । अद्याप्यग्रहे हिंगादाहुत इत्यादिभिर्मंत्रैर्वसतीवरीष्वाधवनं सोमस्य क्रियते । नतत्कुरुतेत्यर्थः । गव्या गवि भवानि वस्त्रेव वस्त्राण्याच्छादकानि चर्माणीव मेषान् वासयंत इवाच्छादयंत एव नरो नेतार इंद्रस्यानुचरा मरुतो वक्षणाभ्यो नदीभ्यो नदीनामर्थाय निर्धुक्षन् उदकानि निर्दुहंति । क्षारयंति । यत एवमतः कारणादिंद्रयागाय सोममद्रि- भिरभिषुणुतैव । मोदासिष्टेत्यर्थः ॥

## ॥ अथाष्टादशी ॥

अध ज्मो अधं वा दिवो बृहतो रोचनादधि ।

अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ॥ १८

अध । ज्मः । अध । वा । दिवः । बृहतः । रोचनात् । अधि ।

अया । वर्धस्व । तन्वा । गिरा । मम । आ । जाता ।

सुक्रतो इति सुऽक्रतो । पृण ॥ १८

हे इंद्र अधाधुना ज्मः । जमंति गच्छंत्यस्यामिति ज्मा पृथिवी । तस्याः सकाशादध वापि वा दिवोऽन्तरिक्षाद्बृहतो महतो रोचनात् नक्षत्रैर्दीप्यमानात्स्वर्गाद्वागत्य । अधिः पंचम्यर्थानुवादी । अयानया तन्वा ततया विस्तृतया मम मदीयया गिरा स्तुत्या वर्धस्व । वृद्धो भव । हे सुक्रतो शोभनकर्मवन्निंद्र जाता जातानस्मदीयान् जनानापृण । अभिलषितैः फलैरापूरय ॥

## ॥ अथैकोनविंशी ॥

इंद्राय सु मदिन्तमं सोमं सोता वरेण्यं ।

शक्र एनं पीपयद्विश्वया धिया हिन्वानं न वाजयुं ॥ १९

इंद्राय । सु । मदिन्ऽतमं । सोमं । सोत । वरेण्यं ।

शक्रः । एनं । पीपयत् । विश्वया । धिया । हिन्वानं । न ।

वाजऽयुं ॥ १९

हे अध्वर्यव इंद्रायेंद्रार्थं मदिन्तमं मादयितृतमं वरेण्यं वरणीयं यं भजनीयं सोमं सु सोत । अभिषुत । कुत इत्यत आह । शक्र इंद्रो विश्वया धिया सर्वया क्रिययाग्निष्टोमादिलक्षणया हिन्वानं प्रीणयंतं वाजयुमन्नमात्मन इच्छंतमेनं यजमानं । नेति संप्रत्यर्थीयः संप्रति पीपयत् । वर्धयति । अतः कारणात्तस्मा इंद्राय सोमं सुनुतेत्यर्थः ॥

॥ अथ विंशी ॥

मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा ।

भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥ २०

मा । त्वा । सोमस्य । गल्दया । सदा । याचन् । अहं । गिरा ।

भूर्णिं । मृगं । न । सवनेषु । चुक्रुधं । कः । ईशानं । न ।

याचिषत् ॥ २०

हे इंद्र त्वां सवनेषु यज्ञेषु सोमस्य गल्दया गालनेनास्रावणेन गिरा स्तुत्या च युक्तोऽहं सदा सर्वदा याचन् याचमानः सन् मा चुक्रुधं मा क्रोधयानि। बहुशो याच्यमाने त्वयि क्रोधो जायते तं सोमस्य गालनेन स्तुत्या चापनयामीत्यर्थः। कीदृशं त्वां। भूर्णिं भर्तारं मृगं न सिंहमिव भीमं। स्वामिन इंद्रस्य याचने लौकिकन्यायं दर्शयति। लोके को वा पुरुष ईशानमीश्वरं स्वामिनं न याचिषत्। न याचेत। सर्व एव हि याचते। अतोऽहमपि त्वां स्वामिनं याच इति भावः॥

॥ इति पंचमस्य सप्तमे त्रयोदशो वर्गः ॥

॥ अथैकविंशी ॥

मदेनेषितं मदमुग्रमुग्रेण शवसा ।

विश्वेषां तरुतारं मदच्युतं मदे हि ष्मा ददाति नः ॥ २१

मदेन । इषितं । मदं । उग्रं । उग्रेण । शवसा ।

विश्वेषां । तरुतारं । मदऽच्युतं । मदे । हि । स्म ।

ददाति । नः ॥ २१

मदेन मादयित्वा स्तोत्रेषितं प्रेषितं मद मदकरं सोमसुग्रमुद्गूर्णं रसमुग्रेणोद्गूर्णेनाधिकेन शवसा बलेन युक्त इंद्रः पिबत्विति शेषः। पीत्वा च विश्वेषां सर्वेषां शत्रूणां तरुतारं तरीतारं जेतारं मदच्युतं मदस्य शत्रूणां गर्वस्य च्यावयितारं पुत्रं मदे सोमपानेन जनिते हर्षे सति नोऽस्माभ्यं ददाति खलु। अतः सोमं पिबत्वित्यर्थः॥

॥ अथ द्वाविंशी ॥

शेवारे वार्या पुरु देवो मर्ताय दाशुषे ।

स सुन्वते च स्तुवते च रासते विश्वगूर्तो अरिष्टुतः ॥ २२

शेवारे । वार्या । पुरु । देवः । मर्ताय । दाशुषे ।

सः । सुन्वते । च । स्तुवते । च । रासते । विश्वऽगूर्तः ।

अरिऽस्तुतः ॥ २२

शेवारे । शेवं सुखं । तस्य गमके यज्ञे दाशुषे चरुपुरोडाशादीनि दत्तवते यजमानाय पुरु पुरूणि बहूनि वार्याणि वरणीयानि धनानि देवो दानादिगुणयुक्त इंद्रो रासते । ददाति । स एव सुन्वते च सोमाभिषवं कुर्वते व स्तुवते च स्तोत्रं कुर्वते च धनानि रासते । कीदृशः सः । विश्वगूर्तो विश्वेषु सर्वेषु कार्येषूद्यतः अतः प्रवृत्तोऽरिष्टुतोऽरिभिः प्रेरयितृभिः प्रशस्तः ॥

॥ अथ त्रयोविंशी ॥

एंद्र याहि मत्स्व चित्रेण देव राधसा ।

सरो न प्रास्युदरं सपीतिभिरा सोमेभिरुरु स्फिरं ॥ २३

आ । इंद्र । याहि । मत्स्व । चित्रेण । देव । राधसा ।

सरः । न । प्रासि । उदरं । सपीतिऽभिः । आ । सोमेभिः ।

उरु । स्फिरं ॥ २३

हे इंद्र आयाहि । आगच्छ । हे देव द्योतमान चित्रेण दर्शनीयेन राधसा धनेन सोमलक्षणेन मत्स्व । माद्य । सपीतिभिर्ऋत्विग्भिः सह पीयमानैः सोमेभिः सोमैरुरु विस्तीर्णं स्फिरं प्रवृद्धमुदरमात्मीयं जठरं सरो न सर इवाप्रासि । आपूरय ॥ प्रा पूरणेऽदादिकः ॥

चातुर्विंशिकेऽहनि माध्यंदिने ब्रह्मशस्त्र आ त्वेति सैकत्रिकः स्तोत्रियस्तृचः । सूत्यते हि । आ त्वा सहस्रमा शतं मम त्वा सूर उदित इति ब्राह्मणाच्छंसिनः । आ० ७, ४, । इति ॥

॥ तत्र प्रथमा सूक्ते चतुर्विंशी ॥

आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।
ब्रह्मयुजो हरय इंद्र केशिनो वहंतु सोमपीतये ॥ २४

आ । त्वा । सहस्रं । आ । शतं । युक्ताः । रथे । हिरण्यये ।
ब्रह्मऽयुजः । हरयः । इंद्र । केशिनः । वहंतु । सोमऽपीतये ॥ २४

हे इंद्र त्वा त्वां सहस्रं सहस्रसंख्याका हरयस्त्वदीया अश्वा आवहंतु । आनयंतु-
स्मद्यज्ञं । तथा शतं शतसंख्याकाश्च भवदीया अश्वास्त्वामावहंतु । यद्यपि द्वावेवास्य
हरी तथापि तद्विभूतयोऽन्येऽपि बहवोऽश्वाः संति : ननु युगपदनेकैरश्वैः कथं यातुं
शक्यत इत्यत आह युक्ता इति । हिरण्मये स्वर्णविकारे ॥ हिरण्यशब्दाद्विकारार्थे
विहितस्य मयट ऋत्व्यवास्त्व्येत्यादौ मलोपो निपात्यते ॥ तादृशे रथे युक्ताः संबद्धाः ।
संबद्धाः । बहूनामश्वानां शीघ्रगमनाय रथे नियुक्तत्वाद्युगपदेव सर्वैरश्वैर्गंतुं शक्यत
इति भावः । कीदृशा हरयः । ब्रह्मयुजा ब्रह्मणा परिदृढेनेंद्रेण युक्ताः । यद्वा
ब्रह्मणास्मदीयेन स्तोत्रेणास्माभिर्दत्तेन हविषा वा युक्ताः केशिनः । केशाः केसराः ।
तैर्युक्ताः । किमर्थमिंद्रस्य वहनं तत्राह । सोमपीतये सोमस्य पानाय । यथास्मदीयं
सोमं पिबेदत आवहंत्वित्यर्थः ॥

॥ अथ पंचविंशी ॥

आ त्वा रथे हिरण्यये हरी मयूरशेप्या ।
शितिपृष्ठा वहतां मध्वो अंधसो विवक्षणस्य पीतये ॥ २५

आ । त्वा । रथे । हिरण्यये । हरी इति । मयूरऽशेप्या ।
शितिऽपृष्ठा । वहतां । मध्वः । अंधसः । विवक्षणस्य ।
पीतये ॥ २५

पूर्वं हर्योर्विभूतिरूपा अश्वा इंद्रमावहंत्विति प्रार्थितं । अधुना तावेवेंद्रमावह-
तामिति प्रार्थ्यंते । हिरण्यये हिरण्मये रथे युक्तौ मयूरशेप्या मयूरशेपौ । मयूर-

वर्णलोपो यद्योस्तौ ॥ सुपां सुलुगिति विभक्तेर्ड्यादेशः ॥ शितिपृष्ठा श्वेतपृष्ठौ । एवं-भूतावश्वौ हे इंद्र त्वामावहतां । किमर्थं । मध्वो मधुरस्यान्यविषयांधसो वस्तुमिष्टस्य स्तुत्यस्य । यद्वा वोढव्यस्य प्राप्तव्यस्यांधसोऽन्नस्य सोमरूपस्य पीतये पानार्थं ॥

॥ इति पंचमस्य सप्तमे चतुर्दशो वर्गः ॥

॥ अथ षड्विंशी ॥

पिबा त्व१स्य गिर्वणः सुतस्य पूर्वपा इव ।

परिष्कृतस्य रसिन इयमासुतिश्चारुर्मदाय पत्यते ॥ २६

पिब । तु । अस्य । गिर्वणः । सुतस्य । पूर्वपाःऽइव ।

परिऽकृतस्य । रसिनः । इयं । आऽसुतिः । चारुः । मदाय ।

पत्यते ॥ २६

हे गिर्वणो गीर्भिर्वननीय स्तुतिभिः संभजनीयेंद्र सुतस्याभिषुतस्यास्य सोमस्य ॥ क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी ॥ इममभिषुतं सोमं तु क्षिप्रं पिब । तत्र दृष्टांतः । पूर्वपा इव । पूर्वः सर्वेभ्यो देवेभ्यो देवेभ्यः प्रथमभाक्षी सन् पिबतीति पूर्वपा वायुः । स इवेंद्रवायवे मुख्ये ग्रहे सर्वेभ्यो देवेभ्यः पूर्वं पिबेत्यर्थः । कीदृशस्य सोमस्य । परिष्कृतस्याभिषवादिभिः संस्कृतस्य ॥ संपर्युपेभ्य इति करोते-र्भूषणे सुट् । परिनिविभ्य इति सुटः षत्वं ॥ रसिनो रसवतः । अपि चेयमासुति-रयमासवो मदकरस्याकः शोभनः सोमरसो मदाय हर्षाय हर्षजननाय पत्यते । संवद्यते ॥ पतल्ट गतौ ॥ यद्वा पत्यतिरैश्वर्यकर्मा ॥ मदाय मदस्य पत्यते । ईष्टे । मदोत्पादने शक्त इत्यर्थः ॥

॥ अथ सप्तविंशी ॥

य एको अस्ति दंसना महाँ उग्रो अभि व्रतैः ।

गमत्स शिप्री न स योषदा गमद्धवं न परि वर्जति ॥ २७

यः । एकः । अस्ति । दंसना । महान् । उग्रः । अभि । व्रतैः ।

गमंत् । सः । शिप्री । न । सः । योषत् । आ । गमत् ।

हवं । न । परि । वर्जति ॥ २७

य इंद्र एकः केवलोऽसहाय एव व्रतैरात्मीयैः कर्मभिरभ्यस्ति शत्रूनभिभवति । अथ दंसना कर्मणा महानधिकोऽन एवोग्र उद्गूर्णबलः शिप्री । शिप्रं शिरस्त्राणं ॥ प्रशंसायामिनिः ॥ शोभनशिरस्त्राणः । यद्वा शिप्रे हनू नासिके वा । तद्वान् स इंद्रो गमत् । गच्छतु । प्राप्नोतु सर्वदा । स नाहयो न योषत् । न पृथग्भवतु । न वियुक्तो भवतु ॥ गमेर्यौतेश्च लेट्यडागमः । इतश्चलोप इतीकारलोपः । गमेर्बहुलं छंदसीति शपो लुक् । यौतेः सिब्बहुलमिति सिप् ॥ हवमस्मदीयं स्तोत्रं चागमत् । अभिगच्छतु । प्राप्नोतु । न परिवर्जति । न परिवर्जयतु । न परित्यजतु । सर्वदास्मदीयं स्तोत्रं चेंद्रः प्राप्नोत्विति यावत् ॥

॥ अथाष्टाविंशी ॥

त्वं पुरं चरिष्णवं वधैः शुष्णस्य सं पिणक् ।

त्वं भा अनु चरो अध द्विता यदिंद्र हव्यो भुवः ॥ २८

त्वं । पुरं । चरिष्णवं । वधैः । शुष्णस्य । सं । पिणक् ।

त्वं । भाः । अनु । चरः । अध । द्विता । यत् । इंद्र ।

हव्यः । भुवः ॥ २८

हे इंद्र त्वं शुष्णस्य शोषकस्यासुरस्य चरिष्णुं चरणशीलं ॥ वा छंदसीत्यमि पूर्वत्वस्य विकल्पितत्वाद्यणादेशः ॥ पुरं निवासस्थानं वधैर्वज्रादिभिरायुधैः सं पिणक् । समचूर्णयः । अभांक्षीरित्यर्थः ॥ पिनष्टेर्लङि मध्यमैकवचने रूपमेतत् ॥ अथापि च भा भासमानस्त्वमनुचरः । तं शुष्णं हंतुमन्वगच्छः । यद्वाथ शुष्णस्य पुरभेदननानंतरं भा दीप्तीस्त्यमनु चरः । अन्वगच्छः । प्राप्तवानित्यर्थः । हे इंद्र त्वं यद्यदा द्विता द्विधा द्विविधैः स्तोतृभिर्यष्टृभिश्च हव्यो ह्वातव्यो भुवः भवेः तदानीं त्वं शुष्णस्य पुरं सं पिणगित्यन्वयः ॥ भवतेर्लेटि सिप्यडागमः । छंदसः शपो लुक् । भूसुवोस्तिङीति गुणप्रतिषेधादुवङ् ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्रह्मशस्त्रे मम त्वेति वैकल्पिकोऽनुरूपस्तृचः ॥ सूत्रं तु पूर्वमुदाहृतं ॥

॥ तत्र प्रथमा सूक्त एकोनत्रिंशी ॥

अमं त्वा सूर उद्दिते मम मध्यंदिने दिवः।

अमं प्रपित्वे अपिशर्वरे वसवा स्तोमासो अवृत्सत ॥ २९

अमं। त्वा। सूरे। उत्ऽइते। मम। मध्यंदिने। दिवः।

अमं। प्रऽपित्वे। अपिऽशर्वरे। वसो इति। आ। स्तोमासः॥

अवृत्सत ॥ २९

सूरे सूर्ये उदित उदयं प्राप्ते पूर्वाह्णसमये मम स्तोमासः स्तोत्राणि हे वसो वासकेन्द्र त्वामावृत्सत। आवर्तयंतु। अस्मदभिमुख्यं गमयंतु। तथा दिवो दिवसस्य मध्यंदिने मध्याह्नेऽपि मदीया स्तोमास्त्वामावर्तयंतु। तथा प्रपित्वे प्राप्ते दिवसस्यावसाने सायाह्नेऽपि मदीयाः स्तोमास्त्वामावर्तयंतु। अपिशर्वरे। शर्वरो रात्रिर्णप्तः कालोऽपिशर्वरः। शार्वरे कालेपि मदीयाः स्तोमास्त्वामावर्तयंतु॥

॥ अथ त्रिंशी ॥

स्तुहि स्तुहीदेते घा ते मंहिष्ठासो मघोनां ॥

निंदिताश्वः प्रपथी परमज्या मघस्य मेध्यातिथे ॥ ३०

स्तुहि। स्तुहि। इत्। एते। घ। ते। मंहिष्ठासः। मघोनां॥

निंदितऽअश्वः। प्रऽपथी। परमऽज्याः। मघस्य।

मेध्यऽअतिथे ॥ ३०

आसंगो राजर्षिर्मेध्यातिथये बहु धनं दत्वा तमृषिं दत्तदानस्य स्वस्य स्तुतौ प्रेरयति। हे मेध्यातिथे यतःहोऽतिथ एनत्संतं वरं स्तुहि स्तुहीत्। पुनः पुनरस्मान् प्रशंसैव। मोदास्व। औदासीन्यं मा कार्षीः। एते घ एते खलु वयं मघोनां धनवतां मध्ये ते तुभ्यं मघस्य धनस्य मंहिष्ठासो दातृतमाः। अतोऽस्मान् स्तुहीत्यर्थः। कास्तौ स्तुतिः तामाह। निंदिताश्वः: यस्य वीर्येण परेषामश्वा निंदिताः कुत्सिता भवंति

ताद्दशः । प्रपथी । प्रकृष्टः पंथाः प्रपथः । तद्वान् सन् । मार्गवर्तीत्यर्थः । परमज्याः उत्कृष्टज्यः । अनेन धनुरादिकं लक्ष्यते । उत्कृष्टायुधयुक्त इत्यर्थः । यद्वा परमानुत्कृष्टाञ्छत्रूञ्जिनाति हिनस्तीति परमज्याः ॥ ज्या वयोहानौ । अस्मादातो मनिन्क्विब्विच् ॥ एवंभूतोऽस्वनासंग इति स्तुहीत्यर्थः ॥

॥ इति पंचमस्य सप्तमे पंचदशो वर्गः ॥

॥ अथैकत्रिंशी ॥

आ यदश्वान्वनन्वतः श्रद्धयाहं रथं रुहं ।

उत वामस्य वसुनश्चिकेतति यो अस्ति याद्वः पशुः ॥ ३१

आ । यत् । अश्वान् । वनन्ऽवतः । श्रद्धया । अहं ।

रथं । रुहं ।

उत । वामस्य । वसुनः । चिकेतति । यः । अस्ति । याद्वः ।

पशुः ॥ ३१

वनन्वतो वननवतः संभक्तवतोऽश्वांस्तुरगानहं प्रायोगिः श्रद्धयादरातिशयेन युक्तः सन् यद्यदा हे मेध्यातिथे त्वदीये रथ आरुहं आरोहयं ॥ रुहेरंतर्भावितण्यर्थात् लिङि लृटहरुहिभ्य इति च्लेरङादेशः ॥ तदानीं मामेवं स्तुहि । उतापि च । प्रकृतस्तुत्यपेक्ष एष समुच्चयः । वामस्य वननीयस्य वसुनो धनस्य ॥ पूर्ववत्कर्मणि षष्ठी । ईदृशं धनं चिकेतति । एष आसंगो दातुं जानाति । याद्वो यदोर्वंशभवः । यद्वा यदवो मनुष्याः । तेषु प्रसिद्धः पशुः ॥ लुप्तमत्वर्थमेतत् ॥ पशुमान् । यद्वा पशुः पश्यतेः । सूक्ष्मस्य द्रष्टा य आसंगोऽस्ति विद्वत् एष चिकेततीत्यन्वयः ॥

॥ अथ द्वात्रिंशी ॥

य ऋज्रा मह्यं मामहे सह त्वचा हिरण्यया ।

एष विश्वान्यभ्यस्तु सौभगासंगस्य स्वनद्रथः ॥ ३२

यः। ऋज्रा। मह्यं। ममहे। सह। त्वचा। हिरण्ययां।

एषः। विश्वानि। अभि। अस्तु। सौभंगा। आऽसंगस्यं।

स्वनत्ऽरंथः ॥ ३२

एषमेवं मां स्तुहीत्यासंगो मेध्यातिथिं ब्रूते। य आसंगस्तात्मा ऋज्रा गमनशीलानि धनानि हिरण्मया हिरण्मय्या त्वचा चर्मणास्तरणेन सह सहितानि मह्यं मेध्यातिथये ममहे ददौ॥ मंहतिर्दानकर्मा॥ एष आसंगस्तात्मा स्वनद्रथः शब्दायमानरथः सन् विश्वानि व्याप्तानि सौभगानि धनानि शत्रूणां स्वभूतान्यभ्यस्तु। अभिभवतु ॥

॥ अथ त्रयस्त्रिंशी ॥

अध प्लायोगिरति दासदन्यानासंगो अग्ने दशभिः सहस्रैः।

अधोक्षणो दश मह्यं रुशंतो नळा इव सरसो निरंतिष्ठन् ॥ ३३

अधं। प्लायोगिः। अति। दासत्। अन्यान्। आऽसंगः।

अग्ने। दशऽभिः। सहस्रैः।

अधं। उक्षणः। दशं। मह्यं। रुशंतः। नळाःऽइंव। सरंसः।

निः। अतिष्ठन् ॥ ३३

अधापि च प्लायोगिः प्रयोगनाम्नः पुत्र आसंगा नाम राजा दशभिर्दशगुणितैः सहस्रैः सहस्रसंख्याकैर्गवादिभिरन्यान्दातॄनतिदासत्। अतिक्रम्य ददाति। अधानंतरमुक्षणः सेचनसमर्था मह्यमासंगेन दत्ता रुशंतो दीप्यमाना दश दशगुणितसहस्रसंख्याकास्ते गवादयो नळा इव। नळास्तटाकोद्भवास्तृणविशेषाः। ते यथा सरसस्तटाकात्संघशो निर्गच्छंति तथैव मह्यं दत्ता गवादयोऽस्मादासंगान्निरतिष्ठन्। निर्गत्यावास्थिषत। एवमेवंप्रकारेण मां स्तुहीति मेध्यातिथिं प्रत्युक्तत्वाद्देवतासां चक्षणान्दवां प्रायोगिरासंग ऋषिः स एव देवतेत्येतदुपपन्नं भवति ॥

॥ अथ चतुस्त्रिंशी ॥

अन्वस्य स्थूरं ददृशे पुरस्तादनस्थ ऊरुरवरंबमाणः ।

शश्वती नार्यभिचक्ष्याह सुभद्रमर्य भोजनं बिभर्षि ॥ ३४

अनु । अस्य । स्थूरं । ददृशे । पुरस्तात् । अनस्थः । ऊरुः ।

अवऽरंबमाणः ।

शश्वती । नारी । अभिऽचक्ष्य । आह । सुऽभद्रं । अर्य ।

भोजनं । बिभर्षि ॥ २४

असमासंगो राजा कदाचिद्देवशापेन नपुंसको बभूव । तस्य पत्नी शश्वती अतर्नं पुंसकत्वेन खिन्ना सती महत्तपस्तेपे । तेन च तपसा स च पुंस्त्वं प्राप । प्राप्त-पुंव्यंजनं तं रात्रावुपलभ्य प्रीता शश्वत्यनया तमस्तौत् ॥ अस्यासंगस्य पुरस्तात्पुरो-भागे गुह्यदेशे स्थूरं स्थूलं वृत्तं सत्पुंव्यंजनमनुददृशे । अनुदृश्यते । अनस्थोऽस्थिरहितश्च स चावयव ऊरुरूर्विस्तीर्णोऽवरंबमाणोऽतिदीर्घत्वेनाधोमुखं लवमानः ॥ यद्वा ऊरुः सुपां सुलुगिति द्विवचनस्य सुः ॥ ऊरू प्रत्यवलंबमानो भवति । शश्वती नामांगिरसः सुता नारी तस्यासंगस्य भार्याभिचक्ष्य संभूतमवयवं निशि दृष्ट्वा हे अर्य स्वामिन् भर्तः सुभद्रमतिशयेन कल्याणं भोजनं भोगसाधनं बिभर्षि धारयसीत्याह । ब्रूते ॥

॥ इति पंचमस्य सप्तमे षोडशो वर्गः ॥

इदं वसो इति द्विचत्वारिंशदृचं द्वितीयं सूक्तं काण्वस्य मेधातिथेरांगिरसस्य च प्रियमेधस्यार्षं । मिन्धि विश्वा इत्यादिके द्वे मेधातिथेरेव । स्वादवः सोमा इत्येषानुष्टुप् शिष्टा गायत्र्यः । इंद्रो देवता । अंत्ये द्वे ऋचौ विभिंदोर्दानस्तुतित्वात्तद्देवताके । तथा चानुक्रांतं । इदं वसो द्विचत्वारिंशन्मेधातिथ्यांगिरसौ प्रियमेधः स्वादवोऽनुष्टबंत्याभ्यां मेधातिथिर्विभिंदोर्दानं तुष्टावेति ॥ गतः सूक्तविनियोगः ॥ ज्योतिष्टोमे मरुत्वतीय आद्यस्तृचोऽनुचरः । सूत्रितं हि । इदं वसो सुतमंध इति मरुत्वतीयस्य प्रतिपदनुचरौ । आ० ५. १४. । इति ॥ द्वितीये रात्रिपर्याये ब्राह्मणाच्छंसिन एष स्तोत्रियस्तृचः । सूत्रितं च । इदं वसो सुतमंध इंद्रेहि मत्स्यंधसः । आ० ६. ४. । इति ॥ प्रथमे चतुर्थेऽहन्यपि मरुत्वतीयस्यानुचरस्तृचः । सूत्रितं च । तं त्वा यज्ञेभिरीमह इदं वसो सुतमंध इति मरुत्वतीयस्य प्रतिपदनुचरौ । आ० ७. ११. । इति ॥

॥ तत्र प्रथमा ॥

इदं वसो सुतमंधः पिबा सुपूर्णमुदरं ।

अनाभयिन्ररिमा ते ॥ १

इदं । वसो इति । सुतं । अंधः । पिब । सुऽपूर्णं । उदरं ।

अनाभयिन् । ररिम । ते ॥ १

हे वसो वासयितरिंद्र इदं पुरो वर्तमानं सुतमभिषुतमंधोऽन्नं सोमलक्षणं पिब । अथोदरं त्वदीयं जठरं सुपूर्णमतिशयेन सुपूर्णं भवति तथेत्यर्थः । हे अनाभयिन् । आ समंताद्बिभेतीत्याभयी ॥ बिभेतेरौणादिक इनिः ॥ नाभयत्यनाभयी । तादृश हे इंद्र ते तुभ्यं त्वदर्थं ररिम । अन्नलक्षणं सोमं दद्मः ॥ रा दाने । छांदसो लिट् ॥

॥ अथ द्वितीया ॥

नृभिर्धूतः सुतो अश्नैरव्यो वारैः परिपूतः ।

अश्वो न निक्तो नदीषु ॥ २

नृऽभिः । धूतः । सुतः । अश्नैः । अव्यः । वारैः । परिऽपूतः ।

अश्वः । न । निक्तः । नदीषु ॥ २

नृभिरध्वर्युभिर्नेतृभिरृत्विग्भिर्धूत आधूतोऽदाभ्यग्रह आधवनेन संस्कृतोऽश्नैरश्मभिर्ग्रावभिः करणभूतैः सुतोऽध्वर्युभिरभिषुतोऽव्योऽवेर्मेषस्य वारैर्वालैः परिपूतः । दशापवित्रस्य नाभिं कुरुते शुक्लं वलव्याः पवित्रमशोतं भवतीति । नदीषु नदनशीलास्वप्स्वश्वो न अश्व इव निक्तो निर्णिक्तः शोधितः । यथाश्वः स्नातोऽश्वोऽपगतमलः सन् दीप्तो भवत्येवं वसतीवर्याख्याभिरद्भिरभिषुतः सोमो दीप्तो भवतीत्यर्थः । ईदृशो यः सोमस्तं ते पिबामित्युत्तरया संबंधः ॥

॥ अथ तृतीया ॥

तं ते यवं यथा गोभिः स्वादुमकर्म श्रीणंतः ।

इंद्र त्वास्मिन्त्सधमादे ॥ ३

तं । ते । यवं । यथा । गोभिः । स्वादुं । अकर्म । श्रीणंतः ।

इंद्र । त्वा । अस्मिन् । सधऽमादे ॥ ३

तं पूर्वोक्तगुणं सोमं हे इंद्र ते त्वदर्थं यवं यथा यवमयं सवनीयपुरोडाशमिव गोभिर्गविभवैः क्षीरादिभिः श्रयणद्रव्यैः श्रीणंतो मिश्रीकुर्वंतः स्वादुं रसत्वेन स्वादनीयमकर्म । अकार्ष्म ॥ कृञो मंत्रे घसेति च्लेर्लुक् ॥ यस्मादेवं तस्मात् हे इंद्र त्वा त्वां तादृशं सोमं पातुमस्मिन्वर्तमाने सधमादे सहसदने यज्ञ आह्वयामीति शेषः ॥

महाव्रते निष्केवल्ये गायत्रतृचाशीताविंद्र इत्सोमपा इत्येतदादिसूक्तशेषः शंसनीयः अंत्यास्तिस्रो वर्जयित्वा तत्रापि स्वादव इत्येतां परित्यज्य तत्स्थाने न ह्यन्यं बळाकरमित्येतामावपेत् । तदेव पंचमारण्यके सूत्रितं । इंद्र इत्सोमपा एक इत्येतत्प्रभृतीनां तिस्र उत्तमा उद्धरति । तासां स्वादवः सोमा आ याहीत्येतामुद्धृत्य न ह्यन्यं बळाकरमित्येतां प्रत्यवदधाति । ऐ० आ० ५. ६. । इति ॥ पंचमेऽहनि मरुत्वतीय इंद्र इदित्यनुचरस्तृचः । सूत्र्यते हि । इंद्र इत्सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ । आ० ७. १२. । इति॥

॥ तत्र प्रथमा सूक्ते चतुर्थी ॥

इंद्र इत्सोमपा एक इंद्रः सुतपा विश्वायुः ।

अंतर्देवान्मर्त्यांश्च ॥ ४

इंद्रः । इत् । सोमऽपाः । एकः । इंद्रः । सुतऽपाः ।

विश्वऽआयुः ।

अंतः । देवान् । मर्त्यान् । च ॥ ४

इंद्र इदिंद्र एव एवे देवान् मर्त्यान् मनुष्यांश्चांतर्मध्ये देवेषु च मध्ये सोमपाः कृत्स्नस्य सोमस्य पाता । नान्ये । ते ह्येकदेशभाजः । अत एव सुतपाः सुतस्याभिषुतस्यास्मदीयस्य सोमस्य कार्त्स्न्येन पाता । इंद्र एक एव विश्वायुः । स चेंद्रः सर्वाचो भवति । धानाकरंभादिरूपाण्यपि सवनेष्विंद्रायैव हूयंते तदभिप्रायेणेदमुच्यते ॥ अत एवंविध इंद्रोऽस्मदीयं हविः स्वीकरोत्वित्यर्थः ॥

॥ अथ पंचमी ॥

न यं शुक्रो न दुराशीर्न तृप्रा उरुव्यचसं ।

अपस्पृण्वते सुहार्दं ॥ ५

न । यं । शुक्रः । न । दुःऽआशीः । न । तृप्राः । उरुऽव्यचसं ।

अपऽस्पृण्वते । सुऽहार्दं ॥ ५

उरुव्यचसं विस्तीर्णव्यापनं सुहार्दं सुहृदयं यमिंद्रं शुक्रो रसाधिक्येन दीप्तः सोमो नापस्पृणुते ॥ स्पृ प्रीतिबलयोरपोपसर्गवशात् प्रीत्यभावे वर्तते ॥ तस्मा च प्रीत्यभावो निवार्यते । न प्रीणयतीति न अपि तु प्रीणयत्येव । तथा दुराशीर्दुःखेन निष्पाद्याशीराश्रयणद्रव्यं यस्य तार्तीयसवनिकस्य सोमस्य सोऽपि यमिंद्रं नापस्पृणुते प्रीणयत्येव । तृप्रास्तर्पका अन्ये चरुपुरोडाशादयश्च यमिंद्रं नापस्पृण्वते न न प्रीण-अपि तु प्रीणयंत्येव तमिंद्रं स्तुम इति शेषः । यद्वापेत्युपसर्गो धात्वर्थानुवादकः । त्वमिंद्रं शुक्रादयो नापस्पृण्वते न प्रीणयंति । उरुव्यचसमिति हेतुगर्भं विशेषणं ॥ यतोऽयमिंद्र उरुव्यचा विस्तीर्णव्याप्तिकोऽतः कारणादपर्याप्ताः संतः शुक्रादयः प्रीणयितुं न शक्नुवंतीति भावः ॥

॥ इति पंचमस्य सप्तमे सप्तदशो वर्गः ॥

॥ अथ षष्ठी ॥

गोभिर्यदीमन्ये अस्मन्मृगं न व्रा मृगयंते ॥

अभित्सरंति धेनुभिः ॥ ६

गोभिः । यत् । ईं । अन्ये । अस्मत् । मृगं । न । व्राः ।

मृगयंते ।

अभिऽक्षरंति । धेनुऽभिः ॥ ६

यत् येऽस्मदस्मत्तोऽन्य ऋत्विग्यजमाना ईमेनमिंद्रं गोभिर्गवि अवैः क्षीरादिभिः संस्कृतैः सोमैः सहिताः संतो मृगयंते अन्विष्यंते । तत्र दृष्टांतः । व्रा वरीतारो जालादिभिरावारयैर्निरुंधाना व्याधा मृगं न । यथा मृगमन्विष्यंति तद्वदनधिकारिण एव बलादिंद्रस्यान्वेषणे वर्तंत इत्यर्थः ॥ मृग अन्वेषण इति धातुः ॥ ये च जना धेनुभिः । धेनुरिति वाङ्नाम । वाग्भिः स्तुतिभिरप्यभिक्षरंति अभिमुखं कुत्सितं गच्छंति । सम्यक् स्तोतुं न शक्नुवंतीत्यर्थं ॥ क्षर कद्यगतौ ॥ तथाविधा जना इंद्रं नोपलभंत इत्यर्थः ॥

दशरात्रे तृतीयेऽहनि मरुत्वतीयस्य त्वय इंद्रस्येति तृचोऽनुचरः । सूत्रितं हि । तं तमिद्राधसे मह त्वय इंद्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ । आश्व ७, १०, । इति ॥

॥ तृचे प्रथमा सूक्ते सप्तमी ॥

त्वय इंद्रस्य सोमाः सुतासः संतु देवस्य ।

स्वे क्षये सुतपाव्नः ॥ ७

त्वयः । इंद्रस्य । सोमाः । सुतासः । संतु । देवस्य ।

स्वे । क्षये । सुतऽपाव्नः ॥ ७

देवस्य दानादिगुणयुक्तस्येंद्रस्य पानार्थं त्वयः सवनत्रयरूपेण त्रिधा वर्तमानाः स्वे क्षये स्वकीये यज्ञगृहे सुतासोऽभिषुताः संतु । भवंतु । सुतपाव्नः । हेतुगर्भं विशेषणमेतत् । यस्मादयमिंद्रोऽभिषुतस्यैव सोमस्य पाता तस्मादभिषुताः संत्वित्यर्थः ॥

॥ अथाष्टमी ॥

त्रयः कोशासः श्चोतंति तिस्रश्चम्वः सुपूर्णाः ।

समाने अधि भार्मन् ।

त्रयः । कोशासः । श्चोतंति । तिस्रः । चम्वः । सुऽपूर्णाः ।

समाने । अधि । भार्मन् ॥ ८

त्रयस्त्रिसंख्याकाः कोशासः कोशाः सोमस्याश्रयभूता द्रोणकलशपूतभृदाधवनीयाख्याः श्चोतंति । क्षरंति । इंद्रार्थं सोमं स्रावयंति । तिस्रस्त्रिविधाः सवनत्रयेवर्तमानाश्चम्वश्चमसाश्च सुपूर्णा इंद्रयागाय सोमैः सुपूरिता आसन् । एतत्सर्वं कुत्रेति चेत् उच्यते । समान एकस्मिन्नेव भार्मन् भर्मणि भरे ऋत्विग्भिर्भ्रियमाणे यज्ञे । अधि सप्तम्यर्थानुवादी ॥

॥ अथ नवमी ॥

शुचिरसि पुरुनिःष्ठाः क्षीरैर्मध्यत आशीर्तः ।

दध्ना मंदिष्ठः शूरस्य ॥ ९

शुचिः । असि । पुरुनिःऽस्थाः । क्षीरैः । मध्यतः । आऽशीर्तः ।

दध्ना । मंदिष्ठः । शूरस्य ॥ ९

हे सोम त्वं शुचिरसि । दशापवित्रेण शोधितो भवसि । स त्वं पुरुनिःष्ठा पुरुषु बहुषु पात्रेषु ग्रहचमसादिषु निःशेषेण स्थाता गच्छतो मध्ये मैत्रावरुणग्रहादौ क्षीरैः पयःप्रभृतिभिः स्रतपाद्रव्यैराशीर्तो मिश्रणेन संस्कृतया । तृतीये सवने दध्ना आशीर्तः । एवंभूतस्त्वं शूरस्य विक्रांतस्येंद्रस्य मंदिष्ठो मादयितृतमो भव ॥

॥ अथ दशमी ॥

इमे त इंद्र सोमास्तीव्रा अस्मे सुतासः ।

शुक्रा आशिरं याचंते ॥ १०

इमे । ते । इंद्र । सोमाः । तीव्राः । अस्मे इति । सुतासः ।

शुक्राः । आऽशिरं । याचंते ॥ १०

हे इंद्र ते त्वदीया इमे सोमास्तीव्रास्तीव्रमदा अस्मे अस्माभिरध्वर्युभिः सुतासोऽभिषुताः शुक्राः शुद्धाः संत आशिरं क्षीरादिकं श्रयणद्रव्यं त्वां याचंते । तान् श्रीणीहीत्युत्तरत्रान्वयः ॥

॥ इति पंचमस्य सप्तमेऽष्टादशो वर्गः ॥

## ॥ अथैकादशी ॥

ताँ आशिर पुरोळाशमिंद्रेमं सोमं श्रीणीहि ।

रेवंतं हि त्वा शृणोमि ॥ ११

तान् । आऽशिरं । पुरोळाशं । इंद्र । इमं । सोमं ।

श्रीणीहि ।

रेवंतं । हि । त्वा । शृणोमि ॥ ११

हे इंद्र तान् पूर्वोक्तान् सोमानाशिरं श्रयणद्रव्यं च क्षीरादिकं श्रीणीहि मिश्रय यागार्थं । तदनंतरं पुरोळाशं धानाकरंभादिलक्षणं सवनीयपुरोडाशमिमममदीयं सोमं च श्रीणीहि । मिश्रय । प्रथमं भक्षितं पुरोळाशं पश्चात्पीतेन सोमेन संयोजयेत्यर्थः । तत्र प्रार्थने को हेतुरिति चेत् । हि यस्माद्रेवंतं रयिमंतं । रयेर्मतौ बहुलमिति संप्रसारणं ॥ बहुलधनं त्वां शृणोमि त्वं बहुधन इति सर्वत्र श्रूयसे अतः कारणात् त्वामेव प्रार्थयामहे ॥

## ॥ अथ द्वादशी ॥

हृत्सु पीतासो युध्यंते दुर्मदासो न सुरायां ।

ऊधर्न नग्ना जरंते ॥ १२

हृत्ऽसु । पीतासः । युध्यंते । दुःऽमदासः । न । सुरायां ।

ऊधः । न । नग्नाः । जरंते ॥ १२

हे इंद्र पीतासस्त्वया पीताः सोमा हृत्सु हृदयेषु त्वदीयेषु युध्यंते । परस्परं संप्रहारं कुर्वंते । तत्र दृष्टांतः । सुरायां पीतायां जायमाना दुर्मदासो न दुष्टमदा यथा पातारं मादयंति तद्वत्वां मादयितुं परस्परं युध्यंत इत्यर्थः । अपि च नग्नाः । छंदांसि तानि न जहतीति नग्ना स्तोतारः । ते चोधनं पयसा पूर्णं गवादेरूध इव संपूर्णं त्वां जरंते । स्तुवंति ॥ जरतिः स्तुतिकर्मा ॥

षष्ठेऽहनि यदि रैवतसामसाध्यं पृष्ठस्तोत्रं तदा निष्केवल्ये रेवाँ इदित्यनुरूपस्तृचः । सूत्रितं हि । रेवतीर्नः सधमादे रेवाँ इद्रेवतः स्तोतेति स्तोत्रियानुरूपौ । आ० ८. १. । इति ॥

॥ तत्रे प्रथमा सूक्ते त्रयोदशी ॥

रेवाँ इद्रेवतः स्तोता स्यात्त्वावतो मघोनः ।

प्रेदु हरिवः श्रुतस्य ॥ १३

रेवान् । इत् । रेवतः । स्तोता स्यात् । त्वाऽवतः । मघोनः ।

प्र । इत् । ऊं इति । हरिऽवः । श्रुतस्य ॥ १३

हे हरिवो हरिवन् ॥ मतुवसो रुरिति नकारस्य रुत्वं ॥ हरी अश्वौ । तद्वंश्चिंद्र रेवतो रयिमतो बहुधनोपेतस्य तव स्तोता रेवान् स्यात् । रयिमान् भवेत् । इच्छब्दोऽवधारणे । धनवान् भवेदेव न तु दारिद्र्यं प्राप्नोति । उक्तमेवार्थं कैमुतिकन्यायेन द्रढयति । त्वावतस्त्वत्सदृशस्य ॥ युष्मदस्मद्भ्यां छंदसि सादृश्य उपसंख्यानमिति वतुप् ॥ मघोनो मघवतो धनाढ्यस्य श्रुतस्य विश्रुतस्य सर्वत्र प्रख्यातस्यान्यस्यापि स्तोता प्रेदु स्यादित्यनुषज्यते । प्रस्यात् । प्रभवेदेव न तु जिहीयते । किमु वक्तव्यं तव स्तोता धनवान् भवेदेवेति ॥

॥ अथ चतुर्दशी ॥

उक्थं चन शस्यमानमगोररिरा चिकेत ।

न गायत्रं गीयमानं ॥ १४

उक्थं । च॒न । श॒स्यमा॑नं । अगोः॑ । अ॒रिः । आ । चि॒केत॒ ।

न । गा॒यत्रं॑ । गी॒यमा॑नं ॥ १४

गायतेर्गीः । अगोरस्तोतुररिः शत्रुरिंद्रः शस्यमानं होत्रा पठ्यमानमुक्थं चन शस्त्रमप्या चिकेत । अभिजानाति ॥ कित ज्ञाने । छांदसो लिट् ॥ नेति संप्रत्यर्थे । न संप्रति प्रस्तोत्रादिभिर्गीयमानं गायत्रं गातव्यं साम यद्वा गायत्राख्यमपि चिकेते-त्येव । अतः कारणाद्वयमपि तमिंद्रं स्तुम इत्यर्थः ॥

॥ अथ पंचदशी ॥

मा न॑ इंद्र पीय॒त्नवे॒ मा शर्ध॑ते॒ परा॑ दाः ।

शिक्षा॑ शचीवः॒ शची॑भिः ॥ १५

मा । नः॒ । इं॒द्र॒ । पी॒य॒त्नवे॑ । मा । शर्ध॑ते । परा॑ । दाः॒ ।

शिक्ष॑ । श॒ची॒ऽवः॒ । शची॑भिः ॥ १५

हे इंद्र त्वं पीयत्नवे॥ पीयतिर्वधकर्मा ॥ वधशीलाय हिंसाकारिणे शत्रवे नोऽस्मान्मा परादाः। मा परित्याक्षीः। मा च शर्धतेऽभिभवित्रेऽस्मान्मा परादाः ॥ शृधु प्रसहन इति धातुः ॥ अपि तु हे शचीवः शक्तिमन्निंद्र शचीभिरात्मीयैः कर्मभिः शिक्ष। अस्माननुशाधि। यद्वा शिक्षतिर्दानकर्मा। अभीष्टं धनमस्मभ्यं देहि। यद्वा शत्रून् जेतुं शिक्ष। शक्तान् कर्तुमिच्छ ॥ शकेः सनंतस्य सनि मीमेती-त्यादेशेऽभ्यासलोपे च कृते लोटि रूपमेतत् ॥

॥ इति पंचमस्य सप्तम एकोनत्रिंशो वर्गः ॥

प्रथमे रात्रिपर्याये ब्राह्मणस्ये वयमु त्वेति स्तोत्रियस्तृचः। सूत्रितं च। वयमु त्वा तदिदर्था वयमिंद्र त्वायवोऽभि। आ० ६. ४. । इति ॥

॥ तत्र प्रथमा सूक्ते षोडशी ॥

व॒यमु॑ त्वा त॒दिद॑र्था॒ इंद्र॑ त्वा॒यंतः॒ सखा॑यः ।

कण्वा॑ उ॒क्थेभि॑र्जरंते ॥ १६

वयं । ऊं इति । त्वा । तदित्ऽअर्थाः । इंद्र । त्वाऽयंतः ।

सखायः ।

कण्वाः । उकथेभिः । जरंते ॥ १६

हे इंद्र त्वायवस्त्वामात्मन इच्छंतः सखायः समानख्याना वयं तदिदर्थाः यस्त्वद्विषयं स्तोत्रं तदिदस्तदेवार्थः प्रयोजनं येषां तादृशाः संतस्त्वा त्वां जरामहे । स्तुमहे । उ इति पूरणः । कण्वाः कण्वगोत्रोत्पन्ना अस्मदीयाः पुत्रादयस्तोकथेभिरुक्थैः शस्त्रैर्जरंते । त्वां स्तुवंति ॥

॥ अथ सप्तदशी ॥

न घेमन्यदा पपन वज्रिन्नपसो नविष्टौ ।

तवेदु स्तोमं चिकेत ॥ १७

न । घ । इ । अन्यत् । आ । पपन । वज्रिन् । अपसः ।

नविष्टौ ।

तव । इत् । ऊं इति । स्तोमं । चिकेत ॥ १७

हे वज्रिन् वज्रवन्निंद्र अपसोऽपस्विनः कर्मवतस्तव संबंधिनि नविष्टावभिनवे यागे वर्तमानोऽहमन्यत् त्वद्विषयादन्यत्स्तोत्र न घें नैवापपन । अभिष्टौमि ॥ पनतेः स्तुतिकर्मण उत्तमे णलि लिटि रूपं ॥ अपि तु तवेदु तवैव स्तोमं स्तोत्रं चिकेत । अभिजानामि । त्वामेव सर्वदा स्तौमीत्यर्थः ॥

॥ अथाष्टादशी ॥

इच्छंति देवाः सुन्वंतं न स्वप्नाय स्पृहयंति ।

यंति प्रमादमतंद्राः ॥ १८

इच्छंति । देवाः । सुन्वंतं । न । स्वप्नाय । स्पृहयंति ।

यंति । प्रऽमादं । अतंद्राः ॥ १८

सुन्वंतं सोमाभिषवं कुर्वंतं यजमानं देवा इंद्रादयः सर्वं इच्छंति रचितुं । स्वप्नाय न स्पृहयंति । स्वप्नावस्थां तस्य सुन्वतो नघ्नंति । सर्वदा प्रबुद्धमेव कुर्वंतीत्यर्थः ॥ स्पृहेरीप्सित इति कर्मणि चतुर्थी । स्पृह ईप्सायां चुरादिरदंतः ॥ यत एवमतः कारणादतंद्रा अनालसा देवाः प्रमादं प्रकर्षेण मदकरं तदीयं सोमं यंति । प्राप्नुवंति ॥

॥ अथैकोनविंशी ॥

ओ षु प्र याहि वाजेभिर्मा हृणीथा अभ्य१स्मान् ।

महाँ इव युवजानिः ॥ १९

ओ इति । सु । प्र । याहि । वाजेभिः । मा । हृणीथाः ।

अभि । अस्मान् ।

महान्ऽइव । युवऽजानिः ॥ १९

हे इंद्र वाजेभिर्वाजैरस्मभ्यं दातव्यैरन्नैः साकमस्मानभि आभिमुख्येन सु सुष्ठु प्र प्रकर्षेण ओ आ उ याहि । शीघ्रमायाह्येव ॥ आगच्छेव । मा हृणीथाः । मा क्रुध्यस्व ॥ हृणीयतिः क्रुध्यतिकर्मा । यद्वा मा लज्जां प्राप्नुहि ॥ हृणीङ् लज्जायामिति कण्ड्वादौ पठ्यते ॥ तत्र दृष्टांतः । महानिव युवजानिः । युवतिर्जाया यस्य स तथोक्तः । जायाया निङिति समासांतो निङादेशः ॥ ईदृशो महान् गुणैरधिकोऽपि यथा स्वभार्यां प्रति निर्लज्जः सन् शीघ्रं गच्छति तद्वत् ॥

॥ अथ विंशी ॥

मो ष्व१द्य दुर्हणावांत्सायं करदारे अस्मत् ।

अश्रीर इव जामाता ॥ २०

मो इति । सु । अद्य । दुःऽहनावात् । सायं । करत् ।

आरे । अस्मत् ।

अश्रीरःऽइव । जामाता ॥ २०

दुर्हणावान्। परैर्दुःसहनं दुर्हणं। महानिंद्रोऽद्येदानीमस्मदारेऽस्माकं समीप आगच्छतु। स सुष्टुतिशयेन सार्धं दिवसस्यावसानं सायंकालं मो करत्। मा कार्षीत्॥ करोतेर्माङि लुङि कृमृदृरुहिभ्य इति च्लेरङादेशः॥ जामाता। जायन्ते इति जा अपत्यं। तस्य निर्माता दुहितुःपतिः। अभ्मीर इव। न भीरभीः। तदस्यास्तीत्यभीरः॥ मत्वर्थीयो रः॥ गुणैर्विहीनः कुत्सितो जामाता यथा दारहरणसा-नोऽप्यासायंकालं विलंबते। तद्वत् कालविलंबं मा कृथा इत्यर्थः॥

॥ इति पंचमस्य सप्तमे त्रिंशो वर्गः॥

॥ अथैकविंशी॥

विद्मा ह्यस्य वीरस्य भूरिदावरीं सुमतिं।

त्रिषु जातस्य मनांसि॥ २१

विद्म। हि। अस्य। वीरस्य। भूरिऽदावरीं। सुऽमतिं।

त्रिषु। जातस्य। मनांसि॥ २१

अस्येंद्रस्य वीरस्य विक्रांतस्य भूरिदावरीं बहुधनस्य दात्रीं सुमतिं कल्याणीं मतिमनुग्रहबुद्धिं विद्मा हि। जानीमः खलु। तथा त्रिषु पृथ्व्यादिषु त्रिषु लोकेषु जातस्य तत्कार्यार्थं प्रादुर्भूतस्य मनांसि हृदयानि च जानीमः। अतस्तस्येंद्रस्य यथा प्रीतिर्जनिष्यते तथा स्तोत्रं कुर्म इत्यर्थः॥

॥ अथ द्वाविंशी॥

आ तू षिंच कण्वमंतं न घा विद्म शवसानात्।

यशस्तरं शतमूतेः॥ २२

आ। तु। सिंच। कण्वऽमंतं। न। घ। विद्म। शवसानात्।

यशःऽतरं। शतऽऊतेः॥ २२

हे अध्वर्यो कण्वमंतं ॥ कणतिः शब्दकर्मा ॥ कण्वाः स्तोतारः । यद्वा कण्वगोत्रा ऋषयः तैर्युक्तमिंद्रमुद्दिश्य तु चिद्रमासिंच । सोमं जुहुधि । शयशानात् । शवो बलं । तद्दिवावरतोऽतिबलात् शतमूतेः । शतं बहुनामैतत् । बह्व्य ऊतयो रक्षा यस्मिन् स शतमूतिः । तादृशादस्मादिंद्रादन्यमन्यतरं शविष्ठतरं पुरुं न कं नैव विद्म । जानीमः । अतस्तमेवोद्दिश्य सोमं जुहुधीत्यर्थः ॥

॥ अथ त्रयोविंशी ॥

ज्येष्ठेन सोतरिंद्राय सोमं वीराय शक्राय ।

भरा पिबन्नर्याय ॥ २३

ज्येष्ठेन । सोतः । इंद्राय । सोमं । वीराय । शक्राय ।

भर । पिबत् । नर्याय ॥ २३

हे सोतरभिषोतरध्वर्यो वीराय विक्रांताय शक्राय शक्तियुक्ताय नर्याय नृभ्यो हितायेंद्राय ज्येष्ठेन मुख्येनैंद्रवायवग्रहेण । स हि धाराग्रहाणां मध्ये ज्येष्ठः । तेन सोमं भर । हर । आहर । वीर्यं प्रापय । स चेंद्रः पिबतु । तं सोमं पिबतु ॥

॥ अथ चतुर्विंशी ॥

यो वेदिष्ठो अव्यथिष्वश्वावंतं जरितृभ्यः ।

वाजं स्तोतृभ्यो गोमंतं ॥ २४

यः । वेदिष्ठः । अव्यथिषु । अश्वऽवंतं । जरितृऽभ्यः ।

वाजं । स्तोतृऽभ्यः । गोऽमंतं ॥ २४

य इंद्रोऽव्यथिष्वव्यथयितृषु सुखकरेषु स्तोतृषु वेदिष्ठोऽतिशयेन वेदिता लब्धा स्तोत्रस्य ज्ञाता स इंद्रो जरितृभ्यः शंसितृभ्यः होत्रादिभ्यः स्तोतृभ्यः प्रस्तोत्रादिभ्यश्चाश्वावंतं बहुभिरश्वैरुपेतं गोमंतं बहुभिर्गोभिरुपेतं संतं वाजमन्नं बलं वा ददातीति शेषः ॥

अभीमांसमंतेऽनिरात्रे प्रथमे पर्याये होतुः शस्त्रे परार्थं पन्यमिति स्तोत्रियस्तृचः ॥ छंदोगैरस्य तृचस्य सूत्रगानत्वात् छंदोगानां प्रथमं साम स्तोत्रिय इति हि सूत्रं ॥

॥ तत्राद्या सप्तमे पंचविंशी ॥

पन्यंपन्यमित्सोतार आ धावत मद्याय ।

सोमं वीराय शूराय ॥ २५

पन्यंऽपन्यं । इत् । सोतारः । आ । धावत । मद्याय ।

सोमं । वीराय । शूराय ॥ २५

हे सोतारोऽभिषोतारोऽध्वर्यवो मद्याय मादयितव्याय वीराय विक्रांताय शूराय शौर्यवत इंद्राय पन्यं पन्यमित् सर्वत्र स्तुत्यमेव सोममाधावत । अभिगमयत । प्रयच्छतेत्यर्थः ॥

॥ इति पंचमस्य सप्तम एकविंशो वर्गः ॥

॥ अथ षड्विंशी ॥

पाता वृत्रहा सुतमा घा गमन्नारे अस्मत् ।

नि यंसते शतमूतिः ॥ २६

पाता । वृत्रऽहा । सुतं । आ । घ । गमत् । न । आरे ।

अस्मत् ।

नि । यंसते । शतंऽऊतिः ॥ २६

सुतमभिषुतं सोमं पाता पानशीलः ॥ ताच्छीलिकस्तृन् । न लोकाव्ययेति कर्मणि षष्ठ्याः प्रतिषेधः ॥ वृत्रहा वृत्रस्यासुरस्य हंतेंद्र आगमत् । घेत्यवधारणे । आगच्छत्वेव । अस्मदस्मत्त आरे दूरदेशे मा भवतु । आगत्य च शतमूतिर्बहुविधरक्षण इंद्रो नियंसते । अस्मदीयान् शत्रून्नियच्छतु । तिरस्करोतु । यद्वा धनान्यस्मभ्यं नियच्छतु । ददातु ॥

॥ अथ सप्तविंशी ॥

एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायं ।

गीर्भिः श्रुतं गिर्वणसं ॥ २७

आ । इह । हरी इति । ब्रह्मऽयुजा । शग्मा । वक्षतः ।

सखायं ।

गीःऽभिः । श्रुतं । गिर्वणसं ॥ २७

(ब्रह्मयुजा ब्रह्मणा मंत्रेण स्तोत्रेण हविषा वा युज्यमानौ शग्मौ सुखकरौ यक्तौ वा ईदृशौ हरी अश्वाविंद्राख्यं सखायं समानख्यानं मित्रभूतमिंद्रमावक्षतः । आवहतां । कीदृशमिंद्रं । गीर्भिः स्तुतिभिः श्रुतं प्रापितगांभीर्यं गिर्वणसं गिरां संभक्तारं स्तुतिभिः संभजनीयं वा ॥)

॥ अथाष्टाविंशी ॥

स्वादवः सोमा आ याहि श्रीताः सोमा आ याहि ।

शिप्रिन्नृषीवः शचीवो नायमच्छा सधमादं ॥ २८

स्वादवः । सोमाः । आ । याहि । श्रीताः । सोमाः ।

आ । याहि ।

शिप्रिन् । ऋषिऽवः । शचीऽवः । न । अयं । अच्छ ।

सधऽमादं ॥ २८

हे शिप्रिन् । शिप्रं शिरस्त्राणं । यद्वा शिप्रे हनू नासिके वा । तद्वन् हे ऋषीवः ऋषिभिः स्तोतृभिर्युक्त शचीवः शक्तिमन् । एवंभूत हे इंद्र अस्मदीया इमे सोमाः स्वादवः । अभिषवादिभिः संस्कृतत्वेनास्वादनार्हा जाताः । अतस्त्वमायाहि । आगच्छ । तथा ते सोमाः श्रीताः । पयआदिभिः श्रयणद्रव्यैर्मिश्रिताः संस्कृताः । अतोऽप्यायाहि । आगच्छ । नेति संप्रत्यर्थे । न संप्रत्ययं स्तोमा सधमादं सह मादयितव्यं त्वामच्छाभिमुखं स्तौतीति शेषः । अतोऽप्यायाहीत्यर्थः ॥

॥ अथैकोनत्रिंशी ॥

स्तुतश्च यास्त्वा वर्धंति महे राधसे नृम्णाय ।

इंद्र कारिणं वृधंतः ॥ २९

स्तुतः । च । याः । त्वा । वर्धंति । महे । राधसे । नृम्णाय ।

इंद्र । कारिणं । वृधंतः ॥ २९

हे इंद्र कारिणं कर्मणां कर्तारं वृधंतो वर्धयंतो ये स्तुतः स्तोतारः । याश्च त्वदीया स्तुतयस्ता त्वां वर्धंति । किमर्थं । महे महते राधसे धनाय नृम्णाय बलाय च । उभयोर्लाभार्थं । ते तदुभयं लभंत इत्यध्याहारः । यद्वोत्तरत्र ते सत्रा दधिरे शवांसीति संबंधः ॥

॥ अथ त्रिंशी ॥

गिरश्च यास्ते गिर्वाह उक्था च तुभ्यं तानि ।

सत्रा दधिरे शवांसि ॥ ३०

गिरः । च । याः । ते । गिर्वाहः । उक्था । च । तुभ्यं । तानि ।

सत्रा । दधिरे । शवांसि ॥ ३०

हे गिर्वाहो गीर्भिः स्तुतिभिर्वहनीयेंद्र ते तुभ्यं क्रियमाणा गिरश्च स्तुतिरूपाश्च वाचो याः संति । उक्था चोक्थानि च शस्त्ररूपाणि च वचांसि तुभ्यं त्वदर्थं क्रियमाणानि यानि संति तानि सर्वाणि सत्रा सहैव शवांसि बलानि दधिरे । तव विदधिरे ॥

॥ इति पंचमस्य सप्तमे द्वाविंशो वर्गः ॥

॥ अथैकत्रिंशी ॥

एवेदेष तुविकूर्मिर्वाजाँ एको वज्रहस्तः ।

सनादमृक्तो दयते ॥ ३१

एव । इत् । एषः । तुविऽकूर्मिः । वाजान् । एकः ।

वज्रऽहस्तः ।

सनात् । अमृक्तः । दयते ॥ ३१

एष एवेंद्रस्तुविकूर्मिर्बहुकर्मा । इदिति पूरकः । एकः सर्वेषु देवेषु मुख्यो वज्रहस्तो वज्रबाहुः सनात् चिरकालादारभ्याष्टृतः शत्रुभिरबाधितः । एवंभूतः स इंद्रो वाजानन्नानि बलानि वा दयते । स्तोतृभ्यो ददाति ॥

---

॥ अथ द्वात्रिंशी ॥

हंता वृत्रं दक्षिणेनेंद्रः पुरू पुरुहूतः ।

महान्महीभिः शचीभिः ॥ ३२

हंता । वृत्रं । दक्षिणेन । इंद्रः । पुरु । पुरुऽहूतः ।

महान् । महीभिः । शचीभिः ॥ ३२

अयमिंद्रो दक्षिणेन हस्तेनैकेनैव वृत्रमावरकमसुरं हंता साधु हतवान् ॥ हंतेः साधुकारिणि तृन् । न लोकाव्ययेति षष्ठीप्रतिषेधः ॥ पुरु पुरुषु ॥ सुपां सुलुगिति विभक्तेर्लुक् ॥ बहुषु देशेषु पुरुहूतो महीभिर्महतीभिः शचीभिः क्रियाभिः शक्तिभिर्वा महान् सर्वस्य उत्कृष्टः । एवंभूत इंद्रोऽस्मान्रक्षत्वित्यर्थः ॥

---

॥ अथ त्रयस्त्रिंशी ॥

यस्मिन्विश्वाश्चर्षणय उत च्यौत्ना ज्रयांसि च ।

अनु घेन्मंदी मघोनः ॥ ३३

यस्मिन् । विश्वाः । चर्षणयः । उत । च्यौत्ना । ज्रयांसि । च ।

अनु । घ । इत् । मंदी । मघोनः ॥ ३…

विश्वाः सर्वाश्चर्षणयः प्रजा यस्मिन्निंद्रे वर्तंते मदधीना भवंति । उतापि च च्यौत्ना च्यौत्नानि । बलनामैतत् । प्रच्युतिसाधनानि बलानि च ज्रयांसि शत्रुविषयाण्यभिभवनानि यस्मिन्निंद्रे वर्तंते ॥ ज्रि अभिभवन इति धातुः ॥ स इंद्रो मघोनः । मघं हविर्लक्षणं धनं । तद्वतो यजमानाननु मंद्यनुमोदको भवति । घेदिति पूरकौ । यद्वा मंदी स्तुत्यः स इंद्रस्तानतुरक्षतीति शेषः । अथवा अस्य मघोनो धनवत इंद्रस्य मंदी स्तोतानुकूलो भवति एष एतानीत्युत्तरत्रैकवाक्यता ॥

॥ अथ चतुस्त्रिंशी ॥

एष एतानि चकारेंद्रो विश्वा योऽति शृण्वे ।

वाजदावा मघोनां ॥ ३४

एषः । एतानि । चकार । इंद्रः । विश्वा । यः । अति । शृण्वे ।

वाजऽदावा । मघोनां ॥ ३४

एष इंद्रो विश्वा विश्वानि च्यौत्न्यैतानि वृत्रवधादीनि वीर्याणि । यद्वा पृथिव्यादीनि भूतजातानि तानि चकार । कृतवान् । य इंद्रो बलैरतिशयितः शृण्वे श्रूयते सर्वत्र श्रूयते । अपि च स इंद्रो मघोनां हविष्मतां यजमानानां वाजदावा वाजस्यान्नस्य दाता भवति ॥

॥ अथ पंचत्रिंशी ॥

प्रभर्ता रथं गव्यंतमपाकाच्चिद्यमवंति ।

इनो वसु स हि वोड्हा ॥ ३५

प्रऽभर्ता । रथं । गव्यंतं । अपाकात् । चित् । यं । अवति ।

इनः । वसु । सः । हि । वोड्हा ॥ ३५

प्रभर्ता प्रहर्ता प्रकर्षेण भरणीय इंद्रो रथं रंहणं गव्यंतं गा इच्छंतं यं स्तोतारमपाकाद्विप्रकृष्टाच्छत्रोः । चिच्छब्दोऽनुक्तसमुच्चयार्थः । विप्रकृष्टादप्यवति रक्षति स हि स खलु लोकेन ईश्वरः सन् वसु धनं वोड्हा साधुवाही भवति ॥ वहेः साधुकारिणि तृन् । अतो न लोकाव्ययेति कर्मणि षष्ठ्याः प्रतिषेधः ॥

॥ इति पंचमस्य सप्तमे त्रयोविंशो वर्गः ॥

॥ अथ षट्त्रिंशी ॥

सनिता विप्रो अर्वद्भिर्हंता वृत्रं नृभिः शूरः ।

सत्योऽविता विधंतं ॥ ३६

स॒निता । विप्रः॑ । अर्व॑त्ऽभिः । हन्ता॑ । वृ॒त्रम् । नृऽभिः॑ । शूरः॑ ।

स॒त्यः । अ॒वि॒ता । वि॒धन्त॑म् ॥ ३६

विप्रो मेधावी इंद्रोऽर्वद्भिरश्वैर्वाहनभूतैः सनिता गंतव्यं संभक्ता । तथा शूरः शौर्योपेतः सन् नृभिर्नेतृभिर्मरुद्भिः सार्धं वृत्रमावरकमसुरं हंता साधुघाती । अपि च विधंतं परिचरंतं यजमानं सत्यः साधुरवितथस्वभावो वा स इंद्रोऽविता परिचरतो यजमानस्य रक्षिता भवति ॥ सर्वविधीनां छंदसि विकल्पितत्वादत्र कस्यचिद्यष्ठो न प्रवर्तते ॥

॥ अथ सप्तत्रिंशी ॥

यज॑ध्वैनं प्रियमेधा॒ इन्द्रं॑ स॒त्राचा॒ मन॑सा ।

यो भू॒त्सोमैः॑ स॒त्यम॑द्वा ॥ ३७

यज॑ध्व । ए॒न॒म् । प्रि॒य॒ऽमे॒धाः॒ । इन्द्र॑म् । स॒त्राचा॑ । मन॑सा ।

यः । भूत् । सोमैः॑ । स॒त्यऽम॑द्वा ॥ ३७

हे प्रियमेधाः । प्रियोऽनुकूलो मेधो यज्ञो येषां ते तथोक्ताः । आत्मनि पूजार्थं बहुवचनं । प्रियमेधा ऋषिः स्वात्मानं संबोध्य ब्रूते । हे प्रियमेधाः सत्राचा सहांचता व्याप्तव्येनेंद्रेण सह वर्तमानेन मनसा चित्तेनैनमिंद्रं यजध्व । यजध्वं । बुद्धिपूर्वकं यजेत्यर्थः ॥ यजध्वैनमिति निपातेनाद्वर्णलोपः ॥ य इंद्रः सोमैः करणभूतैः सत्यमद्वा भूत् सत्यमदोऽवितथमदो भवति ॥

॥ अथाष्टात्रिंशी ॥

गा॒थश्र॑वसं॒ सत्प॑तिं॒ श्रव॑स्कामं पुरु॒त्मान॑म् ।

कण्वा॑सो गा॒त वा॒जिन॑म् ॥ ३८

गा॒थऽश्र॑वसम् । सत्ऽप॑तिम् । श्रवः॑ऽकामम् । पु॒रु॒ऽत्मान॑म् ।

कण्वा॑सः । गा॒त । वा॒जिन॑म् ॥ ३८

हे कण्वासः कण्वपुत्रा मेधातिथयः। पूर्वमृक्षु वचनमात्मनः संबोधनं च। हे कण्वस्य पुत्रा मेधातिथयो यूयं गायत्रवसं गातव्ययशसं सत्पतिं सतां पालयितारं श्रवस्कामं। श्रवःस्तवेषु हविःषु कामोऽभिलाषो यस्य तादृशं। पुरुतमं बहुतमं यद्वा पुरुषु पुरुषु प्रदेशेष्वसंतं अततं गच्छंतं वाजिनं वेगवंतं। एवंगुणकमिंद्रं गात। गायत। स्तुध्वं॥

॥ अथैकोनचत्वारिंशी ॥

य ऋते चिद्गास्पदेभ्यो दात्सखा नृभ्यः शचीवान्।

ये अस्मिन्काममश्रियन्॥ ३९

यः। ऋते। चित्। गाः। पदेभ्यः। दात्। सखा। नृभ्यः। शचीऽवान्।

ये। अस्मिन्। कामं। अश्रियन्॥ ३९

पणिभिर्देवगवीष्वपहृतासु पदेभ्यो गमनानां गवां पादानां संबंधिभ्योऽन्वेषणसाधनभूतेभ्य ऋते चित् ऋतेऽपि विनापि सखा मित्रभूतः शचीवान् कर्मवान् प्रशस्तकर्मा य इंद्रो नृभ्यो नेतृभ्यो देवेभ्यो गाः पणिभिरपहृता दात् पुनर्दत्तवान्। ये वा अस्मिन्निंद्रे काममभिलाषमश्रियन् आश्रितवंत प्रापयन्। तेभ्यो नृभ्य इत्यन्वयः। तमिंद्रं गातेति पूर्वेण सहैकवाक्यता॥

॥ अथ चत्वारिंशी ॥

इत्था धीवंतमद्रिवः काण्वं मेध्यातिथिं।

मेषो भूतोऽभि यन्नयः॥ ४०

इत्था। धीऽवंतं। अद्रिऽवः। काण्वं। मेध्यऽअतिथिं।

मेषः। भूतः। अभि। यन्। अयः॥ ४०

इत्थेत्यमनेनोक्तेन प्रकारेण धीवंतं स्तुतिमंतं काण्वं कण्वपुत्रं मेध्यातिथिं यज्ञातिथिमेतत्संज्ञमृषिं हे अद्रिवो वज्रिवन्निंद्र मेषो भूतो मेषरूपतां प्राप्तो अभियन् अभिगच्छन् अयः॥ य इत्यनुवर्तते। तद्योगाच्च तिङो निघाताभावः॥ [illegible]

भगवन्तः तं त्वा स्तुम इत्यर्थः। मेधातिथिं मेषेति सुब्रह्मण्यायां तैत्तिरीयस्य व्याख्यान-रूपं ब्राह्मणं छंदोगैरेवमाम्नायते। मेधातिथिं ह काण्वायनिं मेषो भूत्वा जहार॥ षड्विं० ब्रा० १, १। इति। तदभिप्रायेणेवं स्तुतिः कृता॥

॥ अथैकचत्वारिंशी॥

शिक्षा विभिंदो अस्मै चत्वार्ययुता ददत्।

अष्टा परः सहस्रा॥ ४१

शिक्ष। विभिंदो इति विऽभिंदो। अस्मै। चत्वारि॥

अयुता। ददत्॥

अष्ट। परः। सहस्रा॥ ४१

विभिंदुनाम्नो राज्ञः सकाशाद्बहु धनं लब्ध्वा तदीयं दानमिदमादिभिस्तृचेन प्रशंसति। हे विभिंदो राजन् ददत् दाता त्वमस्मै मह्यमृषये चत्वार्ययुतायुतानि दशसहस्राणि चत्वारिंशत्सहस्राणि शिक्ष। अशिक्षः। दत्तवानसि। परः पर-स्तादूर्ध्वं अष्टसंख्याकानि सहस्रा सहस्राणि च दत्तवानसि॥

॥ अथ द्वाचत्वारिंशी॥

उत सु त्ये पयोवृधा माकी रणस्य नप्त्या।

जनित्वनाय मामहे॥

उत। सु। त्ये इति। पयःऽवृधा। माकी इति। रणस्य॥

नप्त्या॥

जनिऽत्वनाय। ममहे॥ ४२

अपि च सु सुष्ठु ये ते रणस्य प्रसिद्धे पयोवृधा पयस उदकस्य वर्धयित्र्यौ माकी निर्मात्र्यौ भूतस्यास्य रणस्य स्तोतव्यस्य तव। कीर्तनीया नप्त्यो न पातयित्र्यौ

सर्वदा तदुपजीवित्वे द्यावापृथिव्यौ अनिवनाय पूर्वोक्तधनस्य जमनाय प्रादुर्भावाय लोभाय च भवेते। स्तुतवानस्मि द्यावापृथिव्योः प्रथमयोरेवेदं दानं लभ्यते नान्यत्रेति दानमाहात्म्यप्रशंसाधिगंतव्या॥

॥ इति पंचमस्य सप्तमे चतुर्विंशो वर्गः॥

पिबा सुतस्येति चतुर्विंशत्यृचं तृतीयं सूक्तं काण्वस्य मेध्यातिथेरार्षं। अयुजो बृहत्यो युजः सतोबृहत्य एकविंश्यनुष्टुप् द्वाविंशीत्रयोविंश्यौ गायत्र्यौ चतुर्विंशी बृहती। एताश्चतस्रः कुरयाणस्य पुत्रस्य पाकस्थाम्नो राज्ञो दानस्तुतिप्रतिपादिकाः। अतस्तद्देवताकाः। शिष्टा ऐंद्र्यः। तथा चानुक्रांतं। पिबा चतुर्विंशतिर्मेध्यातिथिः प्रागाथं त्वनुष्टुप् गायत्र्यौ बृहती चांत्याः कौरयाणस्य पाकस्थाम्नो दानस्तुतिरिति॥ चतुर्थेऽहनि निष्केवल्ये वार्हतप्रगाथेतो दानस्तुतीर्विनेदं सूक्तं सप्तम्यष्टम्योश्चोद्धारः। तच्च पंचमारण्यके सूत्रितं। पिबा सुतस्य रसिन इति विंशतिः सप्तमीं चाष्टमीं चोद्धरति। ऐ० आ० ५. १०.। इति॥ ज्योतिष्टोमे निष्केवल्यस्य बार्हतो रथंतरस्थानप्रगाथः पंचमोऽयः। सूत्र्यते हि। पिबा सुतस्य रसिन इति बार्हतप्रगाथः। आ० ५. १५.। इति॥ चातुर्विंशिकेऽहनि निष्केवल्येऽप्ययं प्रगाथः सूत्र्यते हि। उक्तो रथंतरस्योभयं पृष्ठमन्न न इति दृष्टतः। आ० ७. २.। इति॥ एवमन्यत्रापि यदि रथंतरं पृष्ठं भवति तत्र सर्वत्रायं प्रगाथो द्रष्टव्यः॥ पंचमेऽहनि प्रउगशस्त्रे पिबा सुतस्येत्यैन्द्रः प्रगाथः। सूत्रितं च। पिबा सुतस्य रसिनो देव देव योऽस्ति। आ० ७. १२.। इति॥

॥ तत्र प्रथमा॥

पिबा सुतस्य रसिनो मत्स्वा न इंद्र गोमतः।

आपिर्नो बोधि सधमाद्यो वृधे३स्माँ अवंतु ते धियः॥ १

पिब। सुतस्य। रसिनः। मत्स्व। नः। इंद्र। गोऽमतः।

आपिः। नः। बोधि। सधऽमाद्यः। वृधे। अस्मान्।

अवंतु। ते। धियः॥ १

हे इंद्र रसिनो रसवतो गोमतो गोविकारैः पयःप्रभृतिभिः संयुक्तद्रव्यैर्युक्तस्य नोऽस्मदीयस्य सुतस्याभिषुतस्य॥ क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी॥ ईदृशं सोमं पिब। पीत्वा च मत्स्व। तृप्तो भव। अपि च सधमाद्यः सह मादयितव्यः संहतैरस्माभिस्तर्पयितव्यस्त्वमापिरापयिता बंधुः सन् नोऽस्माकं वृधे वर्धनाय बोधि। बुध्यस्व। ते त्वदीया धियो बुद्धयोऽनुग्रहात्मिका अस्मान् स्तोतॄनवंतु। रक्षंतु॥

॥ अथ द्वितीया ॥

भूयाम ते सुमतौ वाजिनो वयं मा नः स्तरभिमातये।

अस्मान् चित्राभिरवतादभिष्टिभिरा नः सुम्नेषु यामय॥ २

भूयाम। ते। सुऽमतौ। वाजिनः। वयं। मा। नः। स्तः।

अभिऽमातये।

अस्मान्। चित्राभिः। अवतात्। अभिष्टिऽभिः। आ। नः।

सुम्नेषु। यमय॥ २

हे इंद्र ते तव सुमतौ शोभनायां मतावनुग्रहबुद्धौ वाजिनो हविष्मंतो वयं भूयाम। वर्तमाना भवाम। अभिमातये। अभिमन्यत इत्यभिमातिः शत्रुः। तस्मै तदर्थं नोऽस्मान्मा स्तः। मा हिंसीः॥ स्तृङ् हिंसायां। माङि लुङि छांदसो लुक्॥ अपि च त्वमिष्टिभिरन्वेषणीयाभिः प्रार्थनीयाभिश्चित्राभिश्चायनीयाभिर्बहुविधाभिर्वा त्वदीयाभिरूतिभिरस्मानवतात्। अव। रक्ष। तथा नोऽस्मान् सुम्नेषु सुखेष्वायामय। आयतान् कुरु। सर्वदा सुखिन एव कुरु॥

॥ अथ तृतीया ॥

इमा उ त्वा पुरूवसो गिरो वर्धंतु या मम।

पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत॥ ३

इमाः । ऊं इति । त्वा । पुरुवसो इति पुरुऽवसो । गिरः ।

वर्धंतु । याः । मम ।

पावकऽवर्णाः । शुचयः । विपःऽचितः । अभि । स्तोमैः ।

अनूषत ॥ ३

हे पुरूवसो बहुधनेंद्र मम मदीया इमा गिरः शस्त्ररूपा वाचस्त्वा त्वां वर्धंतु । वर्धयंतु । तथा पावकवर्णा अग्निसमानतेजस्का अत एव शुचयः शुद्धा विपश्चितो विद्वांस उद्गातारश्च स्तोमैः स्तोत्रैर्बहिःपवमानादिभिरभ्यनूषत । त्वामभिष्टुवंति ॥ नू स्तुतौ कुटादिः ॥

॥ अथ चतुर्थी ॥

अयं सहस्रमृषिभिः सहस्कृतः समुद्र इव पप्रथे ।

सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥ ४

अयं । सहस्रं । ऋषिऽभिः । सहःऽकृतः । समुद्रःऽइव । पप्रथे ।

सत्यः । सः । अस्य । महिमा । गृणे । शवः । यज्ञेषु ।

विप्रऽराज्ये ॥ ४

अयमिंद्रः सहस्रं सहस्रसंख्याकैरृषिभिरतींद्रियार्थदर्शिभिः स्तोतृभिः सहस्कृतः सहसा बलेन युक्तः कृतः । स्तुत्या हि देवताया बलं वर्धते । स चैवंभूतः सन् समुद्र इवोदधिरिव पप्रथे । प्रथितो विस्तीर्णो बभूव । अस्य चेंद्रस्य सत्योऽवितथः स प्रसिद्धो महिमा महत्त्वं शवो बलं च यज्ञेषु यागेषु विप्रराज्ये । राज्ञः कर्म राज्यं । विप्राणां स्तोतॄणां राज्ये स्तुतशस्त्रसंघे गृणे । स्तूयते ॥

चातुर्विंशिकेऽहनि निष्केवल्ये इंद्रमिद्देवतातय इति रैवतसामप्रगाथः शंसनीयः पृष्ठ्येऽहनि निष्केवल्ये त्वयं प्रगाथः । सूत्रितं हि । इंद्रमिद्देवतातय इतीतरेषां पृष्ठ्य एषैकैकमन्वहं । आ० ७. ३. । इति ॥

॥ तत्रे प्रथमा सूक्ते पंचमी ॥

इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।

इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥ ५

इन्द्रं । इत् । देवऽतातये । इन्द्रं । प्रऽयति । अध्वरे ।

इन्द्रं । सम्ऽईके । वनिनः । हवामहे । इन्द्रं । धनस्य । सातये ॥ ५

देवतातये । देवैः स्तोतृभिस्तायते विस्तार्यत इति देवतातिर्यज्ञः । तदर्थमिन्द्रमित् देवेषु मध्ये इन्द्रमेवाह्वयामहे । अध्वरे यज्ञे प्रयति प्रगच्छत्युपक्रान्ते सतीन्द्रं हवामहे । तथा समीके समागते संपूर्णे च यागे वनिनः संभजमाना वयमिन्द्रमेवाह्वयामहे । यद्वा समीकमिति संग्रामनाम । समीके संग्रामे इन्द्रमाह्वयामहे । धनस्य सातये लाभायेन्द्रमेवाह्वयामहे । अतः सोऽयमिन्द्र आगच्छत्विति शेषः ॥

॥ इति पंचमस्य सप्तमे पंचविंशो वर्गः ॥

॥ अथ षष्ठी ॥

इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः सूर्यमरोचयत् ।

इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे सुवानास इन्दवः ॥ ६

इन्द्रः । मह्ना । रोदसी इति । पप्रथत् । शवः । इन्द्रः ।

सूर्यं । अरोचयत् ।

इन्द्रे । ह । विश्वा । भुवनानि । येमिरे । इन्द्रे । सुवानासः ।

इन्दवः ॥ ६

अयमिन्द्रः शवः शवस आत्मीयस्य बलस्य मह्ना महिम्ना महत्त्वेन रोदसी द्यावापृथिव्यौ पप्रथत् । अप्रथयत् । विस्तारितवान् । तथा सर्वोत्कृष्टं सूर्यमप्येवेन्द्रोऽरोचयत् । अदीपयत् । तमसावृतस्य वधेन प्रकाशितवान् । अपि चेन्द्रे स्थितेवेन्द्रे विश्वा विश्वानि व्याप्तानि भुवनानि भूतजातानि येमिरे । उपरमन्ते । इन्द्रेण नियम्यन्त इत्यर्थः । तथा सुवानासः सूयमाना अभिषूयमाणा इन्दवः सोमाश्चापि चेन्द्रे नियम्यन्ते । अन्तर्भावितण्यर्थः ॥

ज्योतिष्टोमो यदि रथंतरपृष्ठस्तदा निष्केवल्येऽभि त्वा पूर्वपीतय इति प्रगाथोऽनुरूपः । सूत्र्यते हि । अभि त्वा पूर्वपीतय इति प्रगाथौ स्तोत्रियानुरूपौ । आ० ५. १५. । इति ॥ महाव्रतेऽपि निष्केवल्ये दक्षिणपक्षेऽयमेव प्रगाथः । सूत्रितं च । अभि त्वा पूर्वपीतय इति रथंतरस्य स्तोत्रियानुरूपौ प्रगाथौ । ऐ० आ० ५. ८. । इति ॥

॥ तत्र प्रथमा सूक्ते सप्तमी ॥

अभि त्वां पूर्वपीतय इंद्र स्तोमेभिरायवः ।

समीचीनास ऋभवः समस्वरन्रुद्रा गृणंत पूर्व्यं ॥ ७

अभि । त्वा । पूर्वऽपीतये । इंद्र । स्तोमेभिः । आयवः ।

संऽईचीनासः । ऋभवः । सं । अस्वरन् । रुद्राः । गृणंत ।

पूर्व्यं ॥ ७

हे इंद्र आयवो मनुष्याः स्तोतारः स्तोमेभिः स्तोत्रैस्त्वामभिष्टुवंति । किमर्थं । पूर्वपीतये सर्वेभ्यो देवेभ्यः पूर्वं प्रथमत एव सोमस्य पानाय । सवनमुखे हि चमसगणैरिंद्रस्यैव सोमो हूयते । तथा समीचीनासः संगता ऋभवः । प्रथमवाचकेन शब्देन तयोऽप्युपलक्ष्यंते । ऋभुर्विभ्वा वाज इत्येते च समस्वरन् । त्वामेव सम्यगस्तुवन् ॥ स्वृ शब्दोपतापयोः ॥ रुद्रा रुद्रपुत्रा मरुतश्च पूर्व्यं पुरातनं इंद्रं त्वामेव गृणंत । अभ्यष्टुवन् । वृत्रवधसमये प्रहर भगवो जहि वीरयस्वेत्येवंरूपया वाचा त्वां स्तुतवंत इत्यर्थः ॥

॥ अथाष्टमी ॥

अस्येदिंद्रो वावृधे वृष्ण्यं शवो मदे सुतस्य विष्णवि ।

अद्या तमस्य महिमानमायवोऽनु ष्टुवंति पूर्वथा ॥ ८

अस्य । इत् । इंद्रः । ववृधे । वृष्ण्यं । शवः । मदे । सुतस्य ।

विष्णवि ।

अद्य । तं । अस्य । महिमानं । आयवः । अनु । स्तुवंति ।

पूर्वऽथा ॥ ८

अस्येदस्यैव यजमानस्य हर्षाय प्रथमं वीर्यं भवौ बलं चेंद्रो वावृधे । वर्धयति । सुतस्याभिषुतस्य सोमस्य पानेन विष्णुवि कात्स्न्येनेंद्रस्य व्यापके मदे हर्षे सति तस्यैव यजमानस्य बलं वर्धयतीत्यर्थः । अद्यास्मिन् कालेऽस्येंद्रस्य तमुक्तगुणं महिमानं महत्त्वमायवो मनुष्या अनुष्टुवंति । आनुपूर्व्येण स्तुवंति । पूर्वथा ॥ पूर्वशब्दादिवार्थे प्रत्नपूर्वेत्यादिना थाल्प्रत्ययः ॥ यथा पूर्वस्मिन् कालेऽस्तुवन् एवमिदानीमपि तेनैव क्रमेण स्तुवंतीत्यर्थः ॥

ज्योतिष्टोमे माध्यंदिनसवने ब्रह्मसाम्न तत्त्वा यामीति प्रगाथोऽनुरूपः । सूत्रितं च । तत्त्वा यामि सुवीर्यमिति प्रगाथौ स्तोत्रियानुरूपौ । आ० ५ १६ । इति ॥ चातुर्विंशिकेऽहनि माध्यंदिनसवनेप्ययं प्रगाथस्तस्यैवानुरूपः । सूत्रितं च । तत्त्वा यामि सुवीर्यमभि प्र वः सुराधसं । आ० ७ . ४ . । इति ॥

॥ तत्र प्रथमा सूक्ते नवमी ॥

तत्त्वा॑ यामि सु॒वीर्यं॒ तद्ब्रह्म॑ पू॒र्वचि॑त्तये ।

येना॑ य॒तिभ्यो॒ भृग॑वे॒ धने॑ हि॒ते येन॒ प्रस्क॑ण्व॒मावि॑थ ॥ ९

तत् । त्वा॒ । या॒मि॒ । सु॒ऽवीर्यं॑ । तत् । ब्रह्म॑ । पू॒र्वऽचि॑त्तये ।

येन॑ । य॒तिऽभ्यः॑ । भृग॑वे । धने॑ । हि॒ते । येन॑ । प्रस्क॑ण्वं ।

आ॒वि॑थ ॥ ९

हे इंद्र तत्सुवीर्यं शोभनवीर्यं त्वा त्वां यामि । याचामि ॥ छांदसो वर्णलोपः ॥ तथा तद्ब्रह्म परिवृढमन्नं पूर्वचित्तये पूर्वप्रज्ञानायान्येभ्यः पूर्वमेव लाभाय त्वां याचामि । धने हितेऽभीष्टे सति येन सुवीर्येण यतिभ्यः कर्मस्वुपरतेभ्योऽयष्टृभ्यो जनेभ्यः सकाशाद्धनमाहृत्य भृगवे महर्षये प्रयच्छसि । यद्वा कर्मसु नियता भृगवस्सो यतयः । तेषामर्थं धनं प्रयच्छसि ॥ तादर्थ्ये चतुर्थी ॥ येन च ब्रह्मणा प्रस्कण्वं कण्वप्रभवं कण्वस्य पुत्रमृषिमाविथ ररक्षिथ तदुभयं याचामीत्यन्वयः ॥

॥ अथ दशमी ॥

येना॑ समु॒द्रमसृ॑जो म॒हीर॒पस्तदि॑न्द्र॒ वृष्णि॑ ते॒ शवः॑ ।

स॒द्यः सो अ॑स्य महि॒मा न सं॒नशे॒ यं क्षो॒णीर॑नुचक्र॒दे ॥ १०

येन । समुद्रं । असृजः । मही: । अपः । तत् । इंद्र ।

वृष्णि । ते । शवः ।

सद्यः । सः । अस्य । महिमा । न । संऽनशे । यं । क्षोणीः ।

अनु । चक्रदे ॥ १०

हे इंद्र येनात्मीयेन बलेन समुद्रमब्धिं प्रति महीर्महतीरप उदकान्यसृजः व्यसृजः । महान् समुद्रो याभिरद्भिर्जलैः पूर्यते तावंति जलानि पुरा त्वं सृष्टवानित्यर्थः ॥ ते त्वदीयं तच्छवो बलं वृष्णि वर्षकं । कामोष्टफलद इत्यर्थः । अस्येंद्रस्य स महिमा न संनशे । न सम्यगापनीयः । परैरप्राप्य इत्यर्थः ॥ नशेः कृत्यार्थे केन्यः ॥ यं महिमानं क्षोणीः क्षोणी पृथिव्यनुचक्रदे अनुगच्छति । क्रंदिरत्र गत्यर्थः । तदधीना वर्तत इत्यर्थः ॥

॥ इति पंचमस्य सप्तमे षड्विंशो वर्गः ॥

॥ अथैकादशी ॥

शग्धी न इंद्र यत्त्वा रयिं यामि सुवीर्यं ।

शग्धि वाजाय प्रथमं सिषासते शग्धि स्तोमाय पूर्व्य ॥ ११

शग्धि । नः । इंद्र । यत् । त्वा । रयिं । यामि । सुऽवीर्यं ।

शग्धि । वाजाय । प्रथमं । सिसासते । शग्धि । स्तोमाय ।

पूर्व्य ॥ ११

हे इंद्र सुवीर्यं शोभनवीर्योपेतं ॥ बहुव्रीहौ वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं ॥ यद्रयिं धनं त्वां यामि याचामि ॥ छांदसो वर्णलोपः ॥ नोऽस्मभ्यं तद्धनं शग्धि । देहि ॥ शकिरत्र दानार्थः । तस्माल्लोटि शपो छांदसः । विकरणस्य लुक् । हुझल्भ्यो हेर्धिरिति हेर्धित्वं ॥ तथा सिषासते संभक्तुमिच्छते ॥ सनतेः सनि सनीवंतर्धेति विकल्पनादिडभावे जनसनखनामित्यात्वं ॥ वाजाय । वाज इत्यन्ननाम । तेन च तद्वान्
लक्ष्यते । हविष्मते यजमानाय प्रथमं मुख्यः पूर्वमेव शग्धि । धनं देहि ॥

वाजायेति द्वितीयार्थे चतुर्थी॥ कर्मभिस्त्वां संभक्तुमिच्छते जनाय प्रथमं वाजाय वाजमन्नं शग्धि। देहि। पूर्व्याय स्तोत्रे हे पूर्व्य पूर्वस्मिन् काले अत्र चिरंतनेंद्र शग्धि। देहि॥ स्तौतेः कर्तर्यौणादिकस्तृन्नित्यादिना तन्प्रत्ययः॥

॥ अथ द्वादशी॥

शग्धी नो अस्य यद्ध पौरमाविथ धिय इंद्र सिषासतः।

शग्धि यथा रुशमं श्यावकं कृपमिंद्र प्रावः स्वर्णरं॥ १२

शग्धि। नः। अस्य। यत्। ह। पौरं। आविथ। धियः।

इंद्र। सिसासतः।

शग्धि। यथा। रुशमं। श्यावकं। कृपं। इंद्र। प्र। आवः।

स्वःऽनरं॥ १२

हे इंद्र धियः कर्माणि स्तोत्राणि वा सिषासतः संभक्तुमिच्छतो नोऽस्माकं संबंधिनोऽस्य यजमानस्य तद्धनं शग्धि प्रदेहि यद्ध येन खलु धनेन पौरं। पुरुनाम राजा। तस्य पुत्रमाविथ ररक्षिथ। अपि च हे इंद्र रुशमं श्यावकं कृपं चैतत्संज्ञकान् राजर्षीन् यथा येन प्रकारेण प्रावः प्रारक्षः तथा स्वर्णरं सर्वस्य प्राणिनो नेतारं प्रापयितारं। यद्वा स्वः स्वर्गं प्रति नेतव्यमिमं यजमानं शग्धि। शक्तं कुरु। धनादिसंपन्नो यागानुष्ठानाय यथा शक्तो भवति तथा कुर्वित्यर्थः। इंद्रेत्यामंत्रितस्य पादादित्वेनाष्टमिकनिघाताभावे षाष्ठिकमामंत्रिताद्युदात्तत्वं॥

चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिनः कन्नव्य इति कद्वान्प्रगाथः। सूत्रितं च। कन्नव्यो अतसीनां कद्रू न्वस्य कृतमिति कद्वंतः प्रगाथाः। आ० ७. ४.। इति॥ अहर्गणेषु द्वितीयादिष्वहःसु तस्मिन् शस्त्रे तस्यैवायं प्रगाथः सूत्रितं हि। आरंभणीयाः पर्यासान् कद्वतोऽहरहःशस्यानीति होत्रका द्वितीयादिष्वेव। आ० ७. १. इति॥

॥ तत्राद्या सूक्ते त्रयोदशी॥

कन्नव्यो अतसीनां तुरो गृणीत मर्त्यः।

नही न्वस्य महिमानमिंद्रियं स्वर्गृणंत आनशुः॥ १३

कत्। नव्यः। अतसीनां। तुरः। गृणीत। मर्त्यः।

नहि। नु। अस्य। महिमानं। इंद्रियं। स्वः। गृणंतः।

आनशुः॥ १३

अतसीनामतंतीनां सततगामिनीनां स्तुतीनां तुरः प्रेरयिता मर्त्यो मरणधर्मा नव्योऽभिनव इदानींतनः कत् को नाम स्तोता गृणीत। स्तुयात्। इंद्रं स्तुयात्। अल्पप्रज्ञैरिनानामर्मरिंद्रः स्तोतुं न शक्यत इत्यर्थः। गॄ शब्दे। क्र्यादिकः। प्वादीनां ह्रस्व इति ह्रस्वत्वं॥ नु पुरा पूर्वस्मिन्नपि काले विद्यमानाः स्वः सर्वे गृणंतः स्तोतारः। यद्वा स्वः सुष्ठुरणीयं प्राप्तव्यमिंद्रं स्तुवंतः स्तुवंतो अस्य इंद्रियं। इंद्रियमिंद्रस्य लिंगमिंद्रस्यैवासाधारणं। अस्येंद्रस्य महिमानं महत्त्वं न ह्यानशुः। न खलु प्राप्नुवन्॥ अश्नोतेर्लिटि व्यत्ययेन परस्मैपदं। अत आदेरित्यभ्यासस्य दीर्घत्वं। अश्नोतेश्चेति नुट्। हि चेति निघातप्रतिषेधः॥

॥ अथ चतुर्दशी ॥

कदु स्तुवंत ऋतयंत देवत ऋषिः को विप्र ओहते।

कदा हवं मघवन्निंद्र सुन्वतः कदु स्तुवत आ गमः॥ १४

कत्। ऊं इति। स्तुवंतः। ऋतऽयंत। देवता। ऋषिः।

कः। विप्रः। ओहते।

कदा। हवं। मघऽवन्। इंद्र। सुन्वतः। कत्। ऊं इति।

स्तुवतः। आ। गमः॥ १४

हे इंद्र स्तुवंतः स्तोत्रं कुर्वंतः कदु को खलु अत्र देवता॥ देवात्तल्लिति स्वार्थिकस्तल्प्रत्ययः। व्यत्ययेन प्रथमा॥ देवं त्वामुद्दिश्य ऋतयंत। ऋतं यज्ञमैच्छन्। त्वदीययागेच्छापि दुर्लभा दूरे त्वद्यागकथा। ऋषिर्द्रष्टा विप्रो मेधावी कः स्तोतोहते। वहति। त्वां स्तुतीः प्रापयति। न कश्चिदपि त्वां स्तोतुं शक्नोतीत्यर्थः। यत एवमतः कारणात् हे मघवन् धनवन्निंद्रानुग्रहीत्रा त्वयैवागंतव्यं॥ स त्वं कदा कस्मिन्काले सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य हवमाह्वानं प्रत्यागमः। आगच्छः। कदु कदा

च कस्मिंश्च काले स्तुवतः केवलं स्तोत्रं कुर्वतो यजमानस्य हवम् आह्वानमभ्यगच्छः ॥ सुन्वतः स्तुवत इत्युभयत्र गतरनुम इति विभक्त्युदात्त‍त्वं । गमञ्च् छि-च्छादित्वात् प्रत्ययः ॥

ज्योतिष्टोमे माध्यंदिनसवने ब्रह्मशस्त्र उदु त्य इति प्रगाथोऽनुरूपानंतरं शंसनीयः । सूत्रितं च । उदु त्ये मधुमत्तमा इंद्रः पूर्भित् । आ० ५. १६. । इति ॥ चातुर्विंशिके माध्यंदिनसवने तस्मिन्नेव शस्त्रेऽयं प्रगाथो वैकल्पिकोऽनुरूपः । सूत्रितं च । उदु त्ये मधुमत्तमास्तमिंद्र प्रतिंभु । आ० ७. ४. । इति ॥

॥ तत्राद्या ऋक् पंचदशी ॥

उदु त्ये मधुमत्तमा गिरः स्तोमास ईरते ।

सत्राजितो धनसा अक्षितोतयो वाजयंतो रथा इव ॥ १५

उत् । ऊं इति । त्ये । मधुमत्ऽतमाः । गिरः । स्तोमासः । ईरते ।

सत्राऽजितः । धनऽसाः । अक्षितऽऊतयः । वाजऽयंतः । रथाःऽइव ॥ १५

त्ये ते प्रसिद्धा मधुमत्तमा अतिशयेन मधुरा गिरोऽप्रगीताः शस्त्ररूपा वाचः स्तोमासः प्रगीतानि बहिःपवमानादीनि स्तोत्राणि चोदीरते । हे इंद्र त्वामुद्दिश्योद्गच्छंति । ऊर्ध्वं प्रसरंति ॥ ईर गतौ । अदादिकः ॥ तत्र दृष्टांतः । सत्राजितः सहैव शत्रून् जयंतोऽत एव धनसाः धनानि संभजंतः ॥ वन षण संभक्तौ । जनसनखनक्रमगमो विट् । विड्वनोरनुनासिकस्यात् इत्यात्वं ॥ अक्षितोतयः । अक्षितः अपरिहिता ऊतयो रक्षा येषां ते तथोक्ताः ॥ क्षियो भावे निष्ठा । निष्ठायामण्यदर्थे इति पर्युदासः द्दीर्घाभावः । अत एव क्षियो दीर्घादिति नत्वाभावश्च । वाजयंतो वाजमन्नमिच्छंतः ॥ क्यचि न छंदस्यपुत्रस्येतीत्वदीर्घयोः प्रतिषेधः ॥ एवंगुणविशिष्टा रथा इव । ते यथा विविधमितस्ततः उच्चरंति तद्वदीरत इत्यर्थः ॥

॥ इति पंचमस्य सप्तमे सप्तविंशो वर्गः ॥

॥ अथ षोडशी ॥

कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमानशुः ।

इन्द्रं स्तोमेभिर्महयन्त आयवः प्रियमेधासो अस्वरन् ॥ १६

कण्वाःऽइव । भृगवः । सूर्याःऽइव । विश्वं । इत् । धीतं ।

आनशुः ।

इन्द्रं । स्तोमेभिः । महयन्तः । आयवः । प्रियऽमेधासः ।

अस्वरन् ॥ १६

कण्वा इव कण्वगोत्रोत्पन्ना ऋषय इव स्तुवंतो भृगवो भृगुगोत्रोत्पन्ना ऋषयो धीतमाध्यातं विश्वमित् व्याप्तं तमेवेंद्रमानशुः । व्यापुः । सूर्या इव । यथा सूर्यरश्मयः सर्वं जगद्व्याप्नुवंति तद्वत् । अपि च प्रियमेधासः प्रियमेधा एतत्संज्ञा गायत्रो मनुष्यास्तमेवेंद्रं महयंतः पूजयंतः स्तोमेभिः स्तोत्रैरस्वरन् । अस्तुवन् ॥ स्वृ शब्दोपतापयोः । भौवादिकः ॥

॥ अथ सप्तदशी ॥

युक्ष्वा हि वृत्रहंतम हरी इंद्र परावतः ।

अर्वाचीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरा गहि ॥ १७

युक्ष्व । हि । वृत्रहन्ऽतम । हरी इति । इंद्र । पराऽवतः ।

अर्वाचीनः । मघऽवन् । सोमऽपीतये । उग्रः । ऋष्वेभिः ।

आ । गहि ॥ १७

हे वृत्रहंतम । वृत्रं हतवान् वृत्रहा अतिशयेन हतवान् वृत्रहंतमः । यथा पुनर्नोत्तिष्ठति तथा हतवानित्यर्थः ॥ अनो नुडिति तमपो नुट् ॥ हे साहयेंद्र हरी त्वदीयावश्वौ युक्ष्व । हिरवधारणे । आत्मीय रथे योजयैव । हे मघवन् धनवन् उग्र उद्गूर्णस्त्वं सोमपीतये सोमपानार्थं ॥ दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं ॥ अर्वा-

वीनःस्मदं गहुत्व रूपेभिस्त्वं विदेशनोसंम रुद्भिः मार्डं परावतः । दूरनामैतत् । दूरे वर्तमानाद्युलोकादपि । आगच्छ ॥ गमेर्लोटः सेर्हिः । छांदसः शपो लुक् । अनुदात्तोपदेशेत्यनुनासिकलोपः । तस्यासिद्धवत्त्वा ल्लादित्यसिद्धत्वाद्धेर्लुगभावः ॥

## ॥ अथाष्टादशी ॥

इमे हि ते कारवो वावशुर्धिया विप्रासो मेधसातये ।

स त्वं नो मघवन्निंद्र गिर्वणो वेनो न शृणुधी हवं ॥ १८

इमे । हि । ते । कारवः । वावशुः । धिया । विप्रासः ।

मेधऽसातये ।

सः । त्वं । नः । मघऽवन् । इंद्र । गिर्वणः । वेनः । न ।

न । शृणुधि । हवं ॥ १८

कारवः कर्मणां कर्तारो विप्रासो मेधाविन इमे खलु यजमाना धिया स्तुत्या हे इंद्र ते त्वां वावशुः । पुनरकामयन् ॥ वाशृ शब्द इत्यस्माद्यङ्लुगंताद्रूपमेतत् ॥ यद्वा वावशुः पुनः पुनरकामयंत ॥ वश कांतौ । अस्माद्यङ्लुगंताल्लिटि उसि अभ्यस्तेति झेर्जुस् । वाङ्कलकोऽडभावः । लिटि वा तुजादित्वादभ्यासदीर्घत्वं । हि चेति निघातप्रतिषेधः ॥ किमर्थं । मेधसातये मेधस्य यागस्य संभजनार्थं ॥ सनोतेः क्तिनि जनसनखनामित्यात्वं । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं ॥ हे मघवन् धनवन् गिर्वणो गोर्भिर्वननीय नोऽस्माकं हवं स्तोत्रं स त्वं पूर्वोक्तगुणकस्त्वं शृणुधि । श्रृणु । बुध्यस्व । वेनो न ॥ वेनतिः कांतिकर्मा ॥ यथा कांतो जातभिलाषः पुरुषः कामयितव्यस्यैकाग्र्येण शृणोति तद्वत् ॥ श्रुशृणुपृकृवृभ्य इति हेर्धित्वं । अन्येषामपीति सांहितिको दीर्घः ॥

## ॥ अथैकोनविंशी ।

निरिंद्र बृहतीभ्यो वृत्रं धनुभ्यो अस्फुरः ।

निरर्बुदस्य मृगयस्य मायिनो निः पर्वतस्य गा आजः ॥ १९

निः । इंद्र । बृहतीभ्यः । वृत्रं । धनुऽभ्यः । अस्फुरः ।

निः । अर्बुदस्य । मृगयस्य । मायिनः । निः । पर्वतस्य ।

गाः । आजः ॥ १९

हे इंद्र वृत्रमावरकमसुरं बृहतीभ्यो महद्भ्यः । लिंगव्यत्ययः ॥ धनुभ्यो धनुस्थ्यः फोटंकेभ्यः ॥ छांदसो रेफलोपः । हेतौ पंचमी ॥ महद्भिर्धनुर्भिर्हेतुभिर्निरस्फुरः ॥ स्फुरतिर्वधकर्मा ॥ निरवधीः । निःशेषेण हतवानसि । यद्वा वृत्रमावरकं मेघं धनुभ्यः । धन्वंति गच्छंतीति धनव आपः । महतीभ्योऽद्भ्यः ॥ तादर्थ्ये चतुर्थी ॥ वृष्टीनामपां लाभार्थं निरवधीः । अपि च मायिनो मायाविनोऽर्बुदस्यैतत्संज्ञकस्यासुरस्य मृगयस्यैतत्संज्ञकस्य च ॥ उभयत्र कर्मणि षष्ठी ॥ एतावसुरौ निरस्फुरः । निःशेषेणावधीः ॥ मायाशब्दस्य व्रीह्यादिषु पाठात् व्रीह्यादिभ्यश्चेति मत्वर्थीय इनिः ॥ तथा पर्वतस्य बलनाम्नासुरेण गवामदर्शनाय निहितस्य गिरेः संबंधिनीर्गा अनेनापहृता निराजः । निरगमयः ॥ अज गतिक्षेपणयोः ॥

॥ अथ विंशी ॥

निरग्नयो रुरुचुर्निरु सूर्यो निः सोम इंद्रियो रसः ।

निरंतरिक्षादधमो महामहिं कृषे तदिंद्र पौंस्यं ॥ २०

निः । अग्नयः । रुरुचुः । निः । ऊं इति । सूर्यः । निः ।

सोमः । इंद्रियः । रसः ।

निः । अंतरिक्षात् । अधमः । महां । अहिं । कृषे । तत् ।

इंद्र । पौंस्यं ॥ २०

हे इंद्र महां महांतं कृत्स्नस्य जगतो व्यापकमहिमाहननशीलं वृत्रं यदा त्वमंतरिक्षादाकाशादधमः निरगमयः ॥ धमतिर्गतिकर्मा । तत्तदानीं पौंस्यं वृत्रहननहेतुभूतं बलं कृषे । कुरुषे । पुरस्कुरुषे ॥ करोतेश्छांदसो विकरणस्य लुक् ॥ अग्नयश्च त्विस्यानगाता नो रुरुचुः । निःशेषेण दिदीपिरे । सूर्यः प्रेरक आदित्योऽपि

निःशेषेण दिदीपे । इंद्रिय इंद्रेण सेव्यो रसो रसा(स्त्र)कोऽन्नमयः सोमश्च निःशेषेण दिदीपे । अग्न्यादयः सर्वे पूर्वं हविषाद्यलाभात्प्रभाः संत इदानीं तस्मिन्यागे रक्षो-हते सम्यक् प्रकाशिषतेत्यर्थः ॥

॥ इति पंचमस्य सप्तमेऽष्टाविंशो वर्गः ॥

॥ अथैकविंशी ॥

यं मे दुरिंद्रो मरुतः पाकस्थामा कौरयाणः ।

विश्वेषां त्मना शोभिष्ठमुपेव दिवि धावमानं ॥ २१

यं । मे । दुः । इंद्रः । मरुतः । पाकऽस्थामा । कौरयाणः ।

विश्वेषां । त्मना । शोभिष्ठं । उपऽइव । दिवि । धावमानं ॥ २१

इदमादिकेन चतुर्ऋचेन कुरयाणपुत्रस्य पाकस्थामनाम्नो राज्ञो दानं लब्ध्वा मेध्यातिथिस्तदीयं दानं स्तौति । यं यादृशं धनसंघं मह्यमिंद्रो मरुतश्च दुः दत्तवंतः तादृशमेव धनसमूहं कौरयाणः । यत्कृत् प्रति युद्धाभियुक्तस्य न हतं यानं हस्त्यश्वादिकं येनासौ कुरयाणः । तस्य पुत्रः कौरयाणः । पाकस्थामा । तिष्ठत्यनेनेति स्थाम बलं । परिपक्वबलः । एतत्संज्ञो राजा मह्यं प्रादात् ॥ ददातेर्लुङि गातिस्थेति सिचो लुक् । बहुलं छंदसि ॥ कीदृशं धनसंघं । विश्वेषां सर्वेषां धनानां मध्ये त्मनात्मना स्वत एव शोभिष्ठमतिशयेन शोभावंतं ॥ मंत्रेष्वाङ्यादेरित्यात्मन आकारलोपः । शोभा-वच्छब्दादातिशायनिक इष्ठन् । विन्मतोर्लुक् । यस्येति लोपः ॥ अतिशयेन शोभावच्छो दृष्टांतः । दिव्याकाश उपेव धावमानं प्रभाभिरुपेतं शीघ्रगामिनं सूर्यमिव । शोभावत्तममित्यर्थः

॥ अथ द्वाविंशी ॥

रोहितं मे पाकस्थामा सुधुरं कक्ष्यप्रां ।

अदाद्रायो विबोधनं ॥ २२

रोहितं । मे । पाकऽस्थामा । सुऽधुरं । कक्ष्यऽप्रां ।

अदात् । रायः । विऽबोधनं ॥ २२

पाकस्थामा राजा रोहितं लोहितवर्णं वृषभमश्वं वा मे मह्यमदात् । दत्तवान् । कीदृशं । सुधुरं शोभनधुरं शोभनवहनधर्माणं ॥ ऋक्पूरब्धूः । पा० ५. ४. ७४. । इत्यकारः समासांतः । नञ्सुभ्यामिति बहुव्रीहावुत्तरपदाद्युदात्तत्वं ॥ कक्ष्यप्रां । कक्ष्या कक्षयोर्बाहुमूलयोर्बध्यमाना रज्जुः तस्याः प्रातारं पूरयितारं । पीवरमित्यर्थः ॥ प्रा पूरणे ॥ रायो धनस्य विबोधनं विशेषेण बोधकं । बहुधनप्राप्तिहेतुमित्यर्थः ऊडिदमित्यादिना रायो विभक्तिरुदात्ता ॥

॥ अथ त्रयोविंशी ॥

यस्मा अन्ये दश प्रति धुरं वहन्ति वह्नयः ।

अस्तं वयो न तुग्र्यं ॥ २३

यस्मै । अन्ये । दश । प्रति । धुरं । वहन्ति । वह्नयः ।

अस्तं । वयः । न । तुग्र्यं ॥ २३

पूर्वोक्त एवाश्वो विशेष्यते । यस्मै ॥ षष्ठ्यर्थे चतुर्थी ॥ यस्याश्वस्य वृषभस्य वा धुरं वोढव्यं युगधुरमन्ये प्रकृताद्व्यतिरिक्ता दशसंख्याका वह्नयो वोढारोऽश्वा बलीवर्दा वा प्रतिनिधयः संतो धां वोढुं वहंति बिभ्रति । वह्नावेकत्व वहने दृष्टांतः । अस्तं । अस्यते क्षिप्यते सखिलपदार्थजातमित्यस्तं गृहं । प्रति वयो न गंतारोऽश्वा यथा तुग्र्यं तुग्रपुत्रं भुज्युं समुद्रतीरदवहन् तद्वत् । तादृशमश्वं मह्यं प्रादादिति पूर्वस्यामृच्यन्वयः ॥ तुग्र्योऽर्णसि च नावत्या भुज्युमूहथुः । ऋग्वे० १. ११६. ४. । इत्याद्यवगंतव्यं । यद्वा यस्मा इति कर्मणि चतुर्थी । यं रथमन्ये दशसंख्याका वह्नयो वोढारोऽश्वा धुरं वहनप्रदेशं प्रति गताः संतो वहंति तादृशं रथमपि मह्यं दत्तवानित्यर्थः ॥

॥ अथ चतुर्विंशी ॥

आत्मा पितुस्तनूर्वास ओजोदा अभ्यंजनं ।

तुरीयमिद्रोहितस्य पाकस्थामानं भोजं दातारमब्रवं ॥ २४

आत्मा । पितुः । तनूः । वासः । ओजःऽदाः । अभिऽअंजनं ।

तुरीयं । इत् । रोहितस्य । पाकऽस्थामानं । भोजं ।

दातारं । अब्रवं ॥ २४

अयं पाकस्थामा त्वा त्वं पितुर्जनकस्य तनूस्तनयः । पिता यथा सन्तानं वर्त्तितवा प्रयस्त एकमयपोत्यर्थः । यथा वासो वासयिता निवासयिता ॥ वासयतेरौणादिकोऽसुन् ॥ अभ्यंजनमभिव्यंजनं यया अर्जति तथोजो दा । ओजसो बलस्य दाता धारयिता वा । यद्वा त्वा सततगामी । पितुरित्यन्ननाम । व्याप्तमन्नं येन दत्तं । तनूर्विस्तृतं वासो वस्त्रमभ्यंजनमभ्यंजनसाधनं तैलादिकं च येन दत्तं । यद्वा ओजोदा बलस्य दातारं पाकस्थामानं तुरीयं कौरयाणपिताकरोपिच्छया वा । यद्वा तुरीयं शत्रूणां तूर्वकं हिंसितारं ओजो बलं शत्रूणां भंजयितारं रोहितस्य लोहितवर्णस्य पूर्वोक्तस्याश्वस्य दातारं । एवंगुणकं पाकस्थामानमस्तवं । उक्तेन प्रकारेणास्तौषं । इदिति पूरकः ॥

॥ इति पंचमस्य सप्तम एकोनत्रिंशो वर्गः ॥

यदिंद्रेत्येकविंशत्यृचं चतुर्थं सूक्तं काण्वगोत्रस्य देवातिथेरार्षं । हचाद्विन्ना इत्येषा पुरउष्णिक् शिष्टास्त्वयुजो बृहत्यो युजः सतोबृहत्यः । स्थूरं राध इत्यादिभिस्तिसृभिः कुरुंगदानस्य स्तूयमानत्वात्तद्देवताकाः । तत्पूर्वाः पंचदश्याद्याश्चतस्रः पूषदेवताका इंद्रदेवताका वा शिष्टा ऐंद्रः । तथा चानुक्रांतं । यदिंद्र सैका देवातिथिस्त्र्यंत्योऽत्यः पुरउष्णिगंतः कुरुंगस्य दानस्तुतिस्तत्पूर्वाश्चतस्रः पौष्ण्यो वेति ॥ महाव्रते निष्केवल्ये बार्हततृचाशीतावाद्यावृतुर्दशर्चः शंसनीयाः । तथैव पंचमारण्यके । यदिंद्र प्रागपागुदगिति चतुर्दश । ऐ० आ० ५. १० । इति ॥ चातुर्विंशिकेऽहनि माध्यंदिने सवनेऽच्छावाकशस्त्र आद्यः प्रगाथो वैकल्पिकस्तोत्रियः । सूत्रितं हि । यदिंद्र प्रागपागुदङ्न्यग्वा गौरो अया क्षतं । आ० ७. ४. । इति ॥

॥ तत्र प्रथमा ॥

यदिंद्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः ।

सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥ १

यत् । इंद्र । प्राक् । अपाक् । उदक् । न्यक् । वा । हूयसे । नृभिः ।

सिम । पुरु । नृऽसूतः । असि । आनवे । असि । प्रऽशर्ध । तुर्वशे ॥ १

हे इंद्र यत् यदि प्राक् प्राच्यां दिशि वर्तमानैः ॥ सप्तम्यंताद्दिग्देशकालवाचिभ्यः स्वार्थेऽस्तातिः । अस्तातेरंचेर्लुक् । पा० ५. ३. ३०. । इति लुक् ॥ अपाक् प्रतीच्यां दिशि वर्तमानैः । यदि वोदक् उदीच्यां दिशि वर्तमानैः । यद्वा न्यक् नीच्यां दिश्यधस्ताद्वर्तमानैः ॥ न्यधी इति नेः प्रकृतिस्वरत्वं । उदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वं ॥ एवंभूतैर्नृभिः स्तोतृभिस्त्वं हूयसे स्वरक्षार्थमाहूयसे हे सिम श्रेष्ठेंद्र । सिम इति वै श्रेष्ठमाचक्षत इति वाजसनेयकं । यद्यप्येवं बहुभिराहूयसे तथाप्यानवे । आनुनाम राजा । तस्य पुत्रे राजर्षौ पुरु बहुलं नृषूतो नृभिस्तदीयैः स्तोतृभिः प्रेरितोऽसि भवसि । राज्ञो हितकरणे त्वां स्तोतारः प्रेरयंतीत्यर्थः ॥ षू प्रेरणे । अस्य त्क्रमणि निष्ठा । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं ॥ अपि च हे शर्ध प्रकर्षेण शत्रूणां धर्षयितरभिभवितरिंद्र तुर्वशे एतन्नामके च राजनि नृषूतोऽसि । नृभिः नेरितो भवसि ॥

॥ अथ द्वितीया ॥

यद्वा रुमे रुशमे श्यावके कृप इंद्र मादयसे सचा ।

कण्वासस्त्वा ब्रह्मभिः स्तोमवाहस इंद्रा यच्छंत्या गहि ॥ २

यत् । वा । रुमे । रुशमे । श्यावके । कृपे । इंद्र । मादयसे ॥

सचा ।

कण्वासः । त्वा । ब्रह्मऽभिः । स्तोमऽवाहसः । इंद्र । आ ।

यच्छंति । आ । गहि ॥ २

यद्वा यद्यपि रुमादिषु चतुर्षु राजसु हे इंद्र त्वं सचा सह मादयसे माद्यसि तथापि स्तोमवाहसः स्तोमानां स्तोत्राणां वोढारः कण्वासः कण्वगोत्रा ऋषयो ब्रह्मभिः परिवृढैस्तैर्हविर्भिर्वा हे इंद्र त्वामायच्छंति । आगमयंति । यद्वा द्वितीयार्थे तृतीया । ब्रह्माणि हवींषि त्वदीयाभिमुख्येन प्रयच्छंति । ददति ॥ दाण् दाने ॥ पाघ्रा इत्यादिना यच्छादेशः ॥ अतस्त्वमागहि । शीघ्रमागच्छ ॥ गमेर्लोटि छांदसः शपो लुक् ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवनेऽच्छावाकशस्त्रे यद्वेति प्रगाथोऽनुरूपः । सूत्रितं च । यथा गौरो अपा कृतमित्यच्छावाकस्य । आ० ७. ४. । इति ॥

॥ तत्र प्रथमसूक्ते तृतीया ॥

यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणं ।

आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥ ३

यथा । गौरः । अपा । कृतं । तृष्यन् । एति । अव । इरिणं ।

आऽपित्वे । नः । प्रऽपित्वे । तूयं । आ । गहि । कण्वेषु ।

सु । सचा । पिब ॥ ३

गौरो गौरमृगस्तृष्यन् पिपासन् अपाद्भिरुदकैः ॥ व्यत्ययेनैकवचनं । ऊडिदमित्यादिना विभक्तेरुदात्तत्वं ॥ कृतं संपूर्णं इतविरिणं निकृष्टं तटाकदेशं यथा येन प्रकारेणावैति अवगच्छति । अवयव्दीऽधिपव्दस्यार्थे । अभिमुखः सन् शीघ्रं गच्छति तथापित्वे बंधुत्वे प्रपित्वे प्राप्ते सति हे इंद्र त्वं नोऽस्मान् तूयं क्षिप्रनामैतत् । शीघ्रमागहि । आगच्छ । आगत्य च कण्वेषु कण्वपुत्रेष्वस्मासु सचा सहैकत्रत्वेनैव विद्यमानं सवं सोमं सु सुष्ठु पिब ॥

॥ अथ चतुर्थी ॥

मंदंतु त्वा मघवन्निंद्रेंदवो राधोदेयाय सुन्वते ।

आमुष्या सोममपिबश्चमू सुतं ज्येष्ठं तद्दधिषे सहः ॥ ४

मंदंतु । त्वा । मघऽवन् । इंद्र । इंदवः । राधःऽदेयाय ।

सुन्वते ।

आऽमुष्य । सोमं । अपिबः । चमू इति । सुतं । ज्येष्ठं ।

तत् । दधिषे । सहः ॥ ४

हे मघवन् धनवन्निंद्र इंदवः क्लेदनाः सोमास्त्वां मंदंतु । मादयंतु हर्षयंतु ॥ मदेर्व्यत्ययेन परस्मैपदं ॥ किमर्थं । सुन्वते सोमाभिषवं कुर्वते यजमानाय राधोदेयाय राधसो धनस्य दानार्थं ॥ ददातेरचो यदिति भावे यत् । ईद्यतीतीकारः । सर्वोऽस्य

इत्याद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वं । शतुरनुम इति सुपश्चत्वात्पराविभक्ति-रुदात्ता ॥ अपि च त्वं सोमस्याशुभ्याभिषवं कृत्वा यद्दिनमपि बलादपहृत्यापिबः । पीतवानसि । त्वं यज्ञवैशसं तथा प्रासहा सोममपिबदिति श्रुतेः । कीदृशं सोमं । चमू । चम्वोरधिषवणफलकयोः सुतमभिषुतं । यद्वा चमूभ्यां चमसाभ्यां सोतृ-भिरानद्धस्य च संबंधिभ्यां धंसनाभिर्वसतीवरीभिः सुतमभिषुतं । यस्मादेवं तस्मात्कारणात् ज्येष्ठं प्रशस्यतमं वृद्धतमं वा सहो बलं दधिषे । हे इंद्र त्वं धारयसि । अतो मदीया अपि सोमास्त्वां मादयंत्विति प्रार्थ्यते ॥

॥ अथ पंचमी ॥

प्र चंक्रे सहंसा सहो बभंजं मन्युमोजंसा ।

विश्वे त इंद्र पृतनायवो यहो नि वृक्षा इंव येमिरे ॥ ५

प्र । चक्रे । सहंसा । सहंः । बभंजं । मन्युं । ओजंसा ।

विश्वे । ते । इंद्र । पृतनाऽयवः । यहो इति । नि ।

वृक्षाःऽइंव । येमिरे ॥ ५

स इंद्रः सहस्रात्मीयेनाभिभवेन वीर्यकर्मणा सहः शत्रूणामभिभवनं प्रचक्रे । प्रकर्षेण कृतवान् । तथौजसा बलेन मन्युं परकीयं क्रोधं बभंज । भग्नवान् । उत्तरोऽर्धर्चः प्रत्यक्षकृतः । हे यहो । महन्नामैतत् । हे महन्निंद्र विश्वे सर्वे पृतनायवो युद्धकामाः शत्रवस्ते त्वया वृक्षा इव महीरुहा इव नियेमिरे । नियता आसन् । यथा वृक्षा निश्चलास्तिष्ठंति तद्वन्निर्व्यापारा अभूवन्नित्यर्थः ॥

॥ इति पंचमस्य सप्तमे त्रिंशो वर्गः ॥

॥ अथ षष्ठी ॥

सहस्रेणेव सचते यवीयुधा यस्त आनळुपंस्तुतिं ।

पुत्रं प्रांवर्गं कृंणुते सुवीर्ये दाश्नोति नमंउक्तिभिः ॥ ६

स स्वःऽइव । सचते । शावऽसुधा । यः । ते । आनट् ।

उपऽस्तुतिं ।

पुत्रं । प्रावर्गं । कृणुते । सुऽवीर्ये । दाश्नोति । नमःउक्तिऽभिः ॥ ६

हे इंद्र ते तवोपस्तुतिं स्तोत्रं यः पुरुष आनट् प्राप्नोति त्वां प्रापयति ॥ अश्नोतेर्लुङि व्यत्ययेन परस्मैपदं ॥ स सचते । सचतिः सेवतिः ॥ षच समवाये ॥ सहस्रेणेव तेन यथा सहस्रसंख्येन बलेन तद्वेत्यर्थः । यश्च यजमानो नमउक्तिभिर्नमस्कारवचनैः स्तोत्रैः सार्धं दाश्नोति हवींषि तुभ्यं ददाति ॥ दाश्ट दाने । स यजमानं सुवीर्ये शोभनवीर्ययुक्ते संग्रामे प्रावर्गं प्रकर्षेण शत्रूणां वर्जयितारं पुत्रं कृणुते । करोति । उत्पादयति । त्वत्प्रसादाल्लभत इत्यर्थः ॥ प्रपूर्वाद्वृजेः कृत्यल्युटो बहुलमिति कर्तरि घञ् । उपसर्गस्य घञ्यमनुष्ये इति दीर्घः । थाथादिनोत्तरपदांतोदात्तत्वं ॥ यद्वा सुवीर्य इत्येतत्पुत्रस्य विशेषणं ॥ द्वितीयार्थे सप्तमी ॥ शोभनवीर्यं पुत्रं ॥ बहुव्रीहौ वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं ॥

॥ अथ सप्तमी ॥

मा भेम मा श्रमिष्मोग्रस्य सख्ये तव ।

महत्ते वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुं ॥ ७

मा । भेम । मा । श्रमिष्म । उग्रस्य । सख्ये । तव ।

महत् । ते । वृष्णः । अभिऽचक्ष्यं । कृतं । पश्येम । तुर्वशं ।

यदुं ॥ ७

हे इंद्र उग्रस्योद्गूर्णबलस्य तव सख्ये सखित्वे सति वयं मा भेम । मा भैष्म । कुतश्चिदपि शत्रोर्भीता मा भूम । मा श्रमिष्म । श्रांताः पीडिताश्च मा भूम । वृष्णः कामानां वर्षितुस्ते तव संबंधि महत्प्रभूतं कृतं वृत्रवधादिलक्षणं कर्माभिचक्ष्यं । अभितः ख्यापनीयं स्तोतव्यं । अतो महानुभावस्य तव सख्यं प्राप्तानां भीतिश्रमौ न जायेते इत्यर्थः । तत्कथमवगम्यत इति चेदुच्यते । तुर्वशनामकं तत्संज्ञं राजानं यदुमेतत्संज्ञं च त्वत्प्रसादात्सुखेन जीवंतौ पश्येम । दृष्टवंतः खलु वयं । अतः कारणात्त्वत्सख्यं प्राप्तस्य भयादिकं न जायत इत्येतदुपपन्नमित्यर्थः ॥

॥ अथाष्टमी ॥

सव्यामनु स्फिग्यं वावसे वृषा न दानो अस्य रोषति ।

मध्वा संपृक्ताः सारघेण धेनवस्तूयमेहि द्रवा पिब ॥ ८

सव्यां । अनु । स्फिग्यं । वावसे । वृषा । न । दानः । अस्य । रोषति ।

मध्वा । संऽपृक्ताः । सारघेण । धेनवः । तूयं । आ । इहि । द्रव । पिब ॥ ८

वृषा कामानां वर्षितेंद्रः सव्यां दक्षिणेतरां स्फिग्यं कटिप्रदेशमनु ॥ तृतीयार्थेऽनोः कर्मप्रवचनीयत्वं ॥ सव्यया स्फिग्या शरीरैकदेशेनैव वावसे। वस्ते। सर्वभूतजातमाच्छादयति। स्वयं सर्वं जगदतीत्य वर्तत इत्यर्थः। निगमांतरं च भवति। यदन्यया स्फिग्या क्षामवस्थाः। ऋग्वे० ३. ३२. ११. । इति। अपि च दानोऽवखंडयिता ॥ दान अवखंडने ॥ पचाद्यच् ॥ स चास्मिंद्रं न रोषति। न छिनत्ति ॥ रिष रुष हिंसायां ॥ इंद्रं हिंसितुं शक्तः कश्चिदपि नास्तीत्यर्थः। यद्वा दानो हविषां दाता यजमानस्त्विंद्रस्य न रोषति। रोषं न जनयति। सर्वदा हवींषि परिचरतीत्यर्थः। उत्तरोऽर्धर्चः प्रत्यक्षकृतः। सारघेण। सरघा मधुमक्षिका। तत्संबंधिना मध्वा मधुना। लुप्तोपममेतत्। मधुनेव स्वदता क्षीरादिना अन्यद्रव्येण संपृक्ताः संसृष्टाः संस्कृता धेनवो धेनुवत् प्रीतिजनका अस्मदीयाः सोमाः। यद्वा धिवेः प्रीणनार्थाद्धेनवः। प्रीणयितार इत्यर्थः। यत एवमतः कारणात् हे इंद्र तूयं क्षिप्रमेहि। अस्मत्समीपमागच्छ। आगत्य च द्रव। सोमा यस्मिन्नुत्तरवेदिलक्षणे स्थाने वर्तंते तं देशं शीघ्रं गच्छ ॥ द्रु गताविति धातुः। द्व्यचोऽतस्तिङ इति सांहितिको दीर्घः ॥ तदनंतरमध्वर्युणा दत्तं सोमं पिब। तेन सोमेन स्वक् खोदरं पूरयेत्यर्थः ॥

॥ अथ नवमी ॥

अश्वी रथी सुरूप इद्गोमाँ इदिंद्र ते सखा ।

श्वात्रभाजा वयसा सचते सदा चंद्रो याति सभामुप ॥ ९

अश्वी । रथी । सुऽरूपः । इत् । गोऽमान् । इत् । इंद्र । ते ।
सखा ।
श्वात्रऽभाजा । वयसा । सचते । सदा । चंद्रः । याति । सभाम् ।
उप ॥ ९

हे इंद्र ते तव सखा मित्रभूतः पुरुषोऽश्वादिगुणविशिष्ट एव भवति । इच्छब्दः प्रत्येकमभिसंबध्यते । अश्वीत् बहुभिरश्वैर्युक्त एव भवति । न कदाचिदश्वैर्वियुज्यते । रथी रथवानेव स भवति । सुरूप इत् शोभनरूपः शोभनावयव एव स भवति । गोमा इत् बह्वीभिर्गोभिर्युक्त एव स भवति । न कदाचिदेतैर्वियुज्यत इत्यर्थः । अपि च श्वात्रभाजा । श्वात्रमिति धननाम । आश्वननीयं शीघ्रं प्राप्तव्यं शोभनं धनं येन भजते तेन धनसंयुक्तेन वयसा । अन्ननामैतत् । अन्नेन स सर्वदा सचते । समवैति । संगच्छते ॥ षच समवाये ॥ अत एव चंद्रः सर्वेषामाह्लादकः सन् सभां जनसंसदमुपयाति । उपगच्छति ॥

॥ अथ दशमी ॥

ऋश्यो न तृष्यन्नवपानमा गहि पिबा सोमं वशाँ अनु ।
निमेघमानो मघवन्दिवेदिव ओजिष्ठं दधिषे सहः ॥ १०

ऋश्यः । न । तृष्यन् । अवऽपानम् । आ । गहि । पिब ।
सोमम् । वशान् । अनु ।
निऽमेघमानः । मघऽवन् । दिवेऽदिवे । ओजिष्ठम् । दधिषे ।
सहः ॥ १०

हे इंद्र ऋश्यो न ऋश्याख्यो मृग इव तृष्यन् पिपासन्संस्त्वमवपानमवनीतं चमसादिषु पात्रेष्वानीतं पातव्यं सोममागहि । अभिगच्छ । गत्वा च तमस्मदीयं सोमं वशाँ अनु अनुकामं यथाकामं पिब । यावता पीतेन पर्याप्तिर्जायते तावता सोमेन स्वोदरं पूरयेत्यर्थः । अत एव सोमपानात् प्राप्तबलस्त्वं दिवे दिवे प्रतिदिवसं निमेघमानो यजमानेभ्यः सुखानि वृष्ट्युदकानि सिंचन् हे मघवन्निंद्र ओजिष्ठमोजस्वित-

असद्गृ पंतमं सद्धो बलं दधिषे । धारयसि ॥ ओजस्विमद्यादिष्ठनि विमतोर्लुगिति विनो लुक् । टेरिति टिलोपः ॥

॥ इति पंचमस्य सप्तम एकत्रिंशो वर्गः ॥

॥ अथैकादशी ॥

अध्व॑र्यो द्रा॒वया॒ त्वं सोम॒मिंद्रः॑ पिपासति ।

उप॑ नू॒नं यु॑युजे॒ वृष॑णा॒ हरी॒ आ च॑ जगाम वृत्र॒हा ॥ ११

अध्व॑र्यो॒ इति॑ । द्र॒वय॑ । त्वं । सोम॑ । इं॒द्रः॑ । पि॒पा॒स॒ति॒ ।

उप॑ । नू॒नं । यु॒यु॒जे॒ । वृष॑णा । हरी॒ इति॑ । आ । च॒ ।

ज॒गा॒म॒ । वृ॒त्र॒ऽहा ॥ ११

हे अध्वर्यो अध्वरस्य नेतस्त्वं सोमं द्रावय । उत्तरवेदिलक्षणं स्थानं प्रापय । यद्वा रसात्मना द्रवणशीलं कुरु । अभिषुणुदित्यर्थः । किं कारणमिति चेत् । इंद्रः पिपासति । इदं सोमं पातुमिच्छति । तथैतत्कथमवगतमिति चेत् तत्राह । वृषणा वर्षितारौ युवानौ वा हरी अश्वौ नूनमद्य युयुजे । अपगस्य सारथिर्योजितवानुथे । वृत्रहा इंद्रस्य इंतेंद्रस्याजगाम । आगतवान् ॥

॥ अथ द्वादशी ॥

स्वयं चित्स मन्यते दाशु॑रि॒र्जनो॒ यत्रा॒ सोम॑स्य तृ॒म्पसि॑ ।

इ॒दं ते॒ अन्नं॒ युज्यं॒ समु॑क्षितं॒ तस्येहि॒ प्र द्र॑वा॒ पिब॑ ॥ १२

स्व॒यं । चि॒त् । सः । म॒न्य॒ते॒ । दाशु॑रिः । जनः॑ । यत्र॑ ।

सोम॑स्य । तृ॒म्पसि॑ ।

इ॒दं । ते॒ । अन्न॑ । युज्य॑ । संऽउ॑क्षितं । तस्य॑ । आ । इ॒हि॒ ।

प्र । द्र॒व॒ । पिब॑ ॥ १२

दाशुरिदाश्वान्॥ दाशतेरौणादिक उरिन्॥ हविषां दाता स यजमानलक्षणो जनः स्वयं पिब स्वयमेवात्मनैव मन्यते। सर्वं जानाति। परायत्तप्रज्ञो न भवतीत्यर्थः। यत्र यस्मिन्ननेसोमस्य पानेन हे इन्द्र त्वं हंपसि तृप्य स॥ तृप तृम्प तृप्तौ। तौदादिकः। शे तृम्फादीनां। पा० ७. १. ५९. १। इति नुम्॥ ते त्वदीयं युज्यं योग्यमिदमस्मदीयं सोमलक्षणमन्नं मधुचितं मध्यक पात्रेष्वासिक्तं॥ षिच क्षरणे। कर्मणि निष्ठा। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं॥ अतस्त्वं तादृशं सोममेहि। अभिगच्छ। प्रद्रव। शीघ्रं आगच्छ। तदनंतरं पिब। पानं कुरु॥

॥ अथ त्रयोदशी ॥

रथेष्ठायाध्वर्यवः सोममिंद्राय सोतन।

अधि ब्रध्नस्याद्रयो वि चक्षते सुन्वंतो दाश्वध्वरं ॥ १३

रथेऽस्थाय। अध्वर्यवः। सोमं। इंद्राय। सोतन।

अधि। ब्रध्नस्य। अद्रयः। वि। चक्षते। सुन्वंतः।

दाशुऽअध्वरं ॥ १३

रथेष्ठाय। रथे तिष्ठतीति रथेष्ठः॥ सुपि स्थ इति कप्रत्ययः। तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक्॥ एवंलक्षणायेंद्राय हे अध्वर्यवः सोमं सोतन। अभिषुणुत॥ षुञ् अभिषवे। तप्तनप्तनथनाश्चेति तनबादेशः॥ ब्रध्नस्य वृद्धस्य मूलस्याभिषवार्थं चर्मणि स्थापितस्योपरावस्य विस्तृतस्याद्गसनोऽध्युपर्यद्रयोऽन्ये पाषाणास्तस्मिन् दिक्षु वर्तमाना दाश्वध्वरं दाशोदाशुर्यजमानस्याध्वरो यागो येन निष्पद्यते तादृशं सोमं सुन्वत ऋत्विग्भिश्चीर्णं स्वयमेवाभिषुण्वंतो वि चक्षते। विशेषेण प्रकाशंते। सोमाभिषवेऽतिशयेनानुकूला वर्तंत इत्यर्थः। अथवाद्रयस्त्वद्रिभिर्हे अध्वर्यवः सोममभिषुणुतेति योज्यं॥

॥ अथ चतुर्दशी ॥

उप ब्रध्नं वावाता वृषणा हरी इंद्रमपसु वक्षतः।

अर्वाचं त्वा सप्तयोऽध्वरश्रियो वहंतु सवनेदुप ॥ १४

उप । ब्रध्न । ववाता । वृषणा । हरी इति । इंद्र । अपऽसुं ।

वक्षतः ।

अर्वाचं । त्वा । सप्तयः । अध्वरऽश्रियः । वहंतु । सवना ।

इत् । उपं १४

वध्नमंतरिक्षं ववाता संभजमानौ ॥ वननेनिष्ठायां छांदसं द्विर्वचनमिडभाव आत्वं धातुखरस्य । अन्येषामपि दृश्यत इति सांहितिकोऽभ्यासदीर्घः । यद्वा वावाता पुनःपुनर्गंतौ ॥ वा गतिगंधनयोः । यङ्लुगंतात्कर्तरि निष्ठा ॥ वृषणा वृषणौ सेक्तारौ हरी हरणशीलावश्वावुभयुग्मौ संतावपसुं दोर्येषु कर्मसु ॥ अपस्शब्दः सकारांतः कर्मवचनः । यीवोपवसनानां छंदसि लोपो वक्तव्य इतीह सकारो लुप्यते ॥ तत्वेमसिंद्रमुपवक्षतः । उपवहतां । उपानयतां ॥ वहतेर्लेट्यडागमः । सिब्बहुलमिति सिप् ॥ अपि चाध्वरश्रियोऽध्वरं श्रयमाणाः सप्तयः सर्पणशीला अन्येऽपि त्वदीया अश्वाः सवना सवनानि प्रातःसवनादीन्यभ्यागसंबंधीनि प्रति हे इंद्र त्वामर्वाक् अस्मत् सुखमुपवहंतु । उपगमयंतु । इदिति पूरणः ॥

॥ अथ पंचदशी ॥

प्र पूषणं वृणीमहे युज्याय पुरूवसुं ।

स शक्र शिक्ष पुरुहूत नो धिया तुजे राये विमोचन ॥ १५

प्र । पूषणं । वृणीमहे । युज्याय । पुरुऽवसुं ।

सः । शक्र । शिक्ष । पुरुऽहूत । नः । धिया । तुजे । राये ।

विऽमोचन ॥ १५

इदमादयस्त्रयस्तृचः पूष्ण इंद्रस्य च लिंगसद्भावादेता उभयथा व्याख्यायंते । पुरूवसुं बहुधनं पूषणं पोषकमिंद्रं यद्वै तत्संज्ञं देवं प्र वृणीमहे । प्रकर्षेण संभजामहे । किमर्थं । युज्याय । युंक्त इति युङ् सखा । तस्य भावाय । सखित्वायेत्यर्थः । हे शक्र शक्त पुरुहूत बहुभिराहुत हे विमोचन पापाद्विमोचयितरिंद्र पूषन्वा स त्वं नोऽस्मान् धियास्मदीयया बुद्ध्या शिक्ष । शक्तान् कर्तुमिच्छ । किमर्थं । राये धनाय

धनप्राप्त्यर्थं आजे शत्रून् तोजयितुं हिंसितुं ॥ तुज हिंसायां अस्मात्कृत्यार्थे केन्प्रत्ययः ॥ यद्वा राय इति क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी । जातायेकवचनं रायो धनानि धिया स्तुत्या प्रीतः सन् नोऽस्मभ्यं । धिष्व । देहि ॥ धिष्वति- दानकर्मा । ऊडिदमिति रायो विभक्तिरुदात्ता ॥

॥ इति पंचमस्य सप्तमे द्वात्रिंशो वर्गः ॥

## ॥ अथ षोडशी ॥

सं नः शिशीहि भुरिजोरिव क्षुरं रास्व रायो विमोचन ।

त्वे तन्नः सुवेदमुस्रियं वसु यं त्वं हिनोषि मर्त्यं ॥ १६

सं । नः । शिशीहि । भुरिजोःऽइव । क्षुरं । रास्व । रायः । विऽमोचन ।

त्वे इति । तत् । नः । सुऽवेदं । उस्रियं । वसु । यं । त्वं । हिनोषि । मर्त्यं ॥ १६

हे इंद्र पूषन्वा नोऽस्मान् सं शिशीहि । सम्यक् निशय । तीक्ष्णबुद्धीन् कुरु । भुरिजोरिव । बाहुनामैतत् । नापितस्य बाह्वोरिव स्थितं क्षुरमिव । अपि च हे विमोचन पापाद्विमोचन पापाद्विमोचयितः रायो धनानि रास्व । अस्मभ्यं देहि ॥ रा दाने ॥ तत्कस्य हेतोः । त्वे त्वयि खलु खिलं । उस्रा गावः । तत्संबद्धं तद्वद्वा निवासकं धनं नोऽस्माकं सुवेदं सुलभं नान्येषु देवेषु । यं धनसमूहं मर्त्यं मनुष्यं स्तोतारं प्रति त्वं हिनोषि प्रेरयति तद्वसु त्वयीत्यन्वयः । यत एवं तस्माद्रास्वेति योज्यं ॥

## ॥ अथ सप्तदशी ॥

वेमि त्वा पूषन्नृंजसे वेमि स्तोतव आघृणे ।

न तस्य वेम्यरणं हि तद्वसो स्तुषे पज्राय साम्ने ॥ १७

वेमि । त्वा । पूषन् । ऋंजसे । वेमि । स्तोतवे । आघृणे ।

न । तस्य । वेमि । अरणं । हि । तत् । वसो इति । स्तुषे ।

पज्राय । साम्ने ॥ १७

हे पूषन् पोषकेंद्र एतन्नामक वा देव त्वा त्वामृंजसे प्रसाधयितुं वेमि । कामये । आघृणे आगतदीप्ते स्तोतवे त्वां स्तोतुं वेमि । कामये । यत्त्वद्व्यतिरिक्तं देवतांतरं तस्य स्तोत्रं न वेमि । न कामये । कुत इति चेत् । हि यस्मादरणमरमणमसुखकरं । अतस्त्वामेव स्तोतुं कामय इत्यर्थः । हे वसो वासक स्तुषे स्तुवते पज्राय प्रार्जकाय स्तोतॄणां साम्ने । साम स्तोत्रं । सामर्थ्यादत तद्वान् लक्ष्यते । तद्वते । यद्वा पज्र इति कक्षीवत आख्या । आम्नातं हि । यद्वां पज्रासो अश्विना हवंते । ऋग्वे० १, ११७, १०, । इति । तस्मै कक्षीवत इव मह्यं । सामर्थ्यादुपमार्थो लभ्यते । अपेक्षितं धनं देहीति शेषः ॥

॥ अथाष्टादशी ॥

परा गावो यवसं कच्चिदाघृणे नित्यं रेक्णो अमर्त्य ।

अस्माकं पूषन्नविता शिवो भव मंहिष्ठो वाजसातये ॥ १८

परा । गावः । यवसं । कत् । चित् । आघृणे । नित्यं ।

रेक्णः । अमर्त्य ।

अस्माकं । पूषन् । अविता । शिवः । भव । मंहिष्ठः ।

वाजऽसातये ॥ १८

हे आघृणे आगतदीप्ते पूषन्निंद्र वा कच्चित् कस्मिंश्चित्कालेऽस्मदीया गावो यवसं तृणं भक्षितुं परा गच्छंति । हे अमर्त्य अमरण देव तदानीं रेक्णस्तद्रूपं धनं नित्यमस्माकं ध्रुवमस्तु । चोरव्याघ्रादिभिर्हिंसितं मा भूत् । अपि च हे पूषन् पोषयितरस्माकमविता रक्षिता भूत्वा शिवः सुखकरो भव । तथा वाजसातये वाजस्यान्नस्य बलस्य वा संभजनार्थं मंहिष्ठो दातृतमो भव ॥

॥ अथैकोनविंशी ॥

स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु।

राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि॥ १९

स्थूरं। राधः। शतऽअश्वं। कुरुङ्गस्य। दिविष्टिषु।

राज्ञः। त्वेषस्य। सुऽभगस्य। रातिषु। तुर्वशेषु।

अमन्महि॥ १९

इदमादिकेन तृचेन देवातिथिः कुरुङ्गनाम्नो राज्ञो दानं स्तौति। कुरुङ्गस्य। कुरून् जेतुं गच्छति कुरुं गच्छतीति वा कुरुङ्गः॥ डोऽन्यत्रापि दृश्यत इति गमेर्डः। पृषोदरादिः॥ एवंभूतस्य त्वेषस्य दीप्तस्य सुभगस्य शोभनधनस्यैवंभूतस्य राज्ञः संबन्धिनीषु दिविष्टिषु दिवः स्वर्गस्यैषणीषु प्राप्तिहेतुभूतासु यागक्रियासु रातिषु दानेषु दक्षिणारूपेषु सत्सु तुर्वशेषु। मनुष्यनामैतत्॥ निर्धारणे सप्तमी। मनुष्येषु मध्ये वयं स्थूरं स्थूलं प्रभूतं शताश्वमश्वानां शतेन युक्तं राधो धनमगन्महि। प्राप्ताः स्म। अलभामहीत्यर्थः॥

॥ अथ विंशी ॥

धीभिः सातानि काण्वस्य वाजिनः प्रियमेधैरभिद्युभिः।

षष्टिं सहस्रानु निर्मजामजे निर्यूथानि गवामृषिः॥ २०

धीभिः। सातानि। काण्वस्य। वाजिनः। प्रियऽमेधैः।

अभिद्युऽभिः।

षष्टिं। सहस्रा। अनु। निःऽमजां। अजे। निः। यूथानि।

गवां। ऋषिः॥ २०

काण्वस्य कण्वपुत्रस्य वाजिनो हविष्मतो मेधातिथेः संबंधिभिर्धीभिर्व्याप्तिभिः स्तोतृभिः सातानि संभक्तान्यभिद्युभिरभिगतदीप्तिभिः प्रियमेधैरेतत्संज्ञैश्च ऋषिभिः सेवितानि निरजां निःशेषेण मुक्तानां गवां षष्टिं सहस्रा षष्टिसंख्याकानि सहस्राणि यूथान्यृषिर्देशातिथिरहमनु पश्चात् निरजे। निःशेषेणागच्छं। साकल्येन प्राप्त-वानस्मि ॥ अज गतिक्षेपणयोः ॥ यथा प्रियमेधानां काण्वानां च गवां यूथानि राज्ञा दत्तानि तत्प्रतिगृहीतं एवं तेन दत्तानि मया प्रतिगृह्यंत इत्यर्थः ॥

॥ अथैकविंशी ॥

हृचाश्चिन्मे अभिपित्वे 'परारणुः ।

गां भजंत मेहनाश्वं भजंत मेहना ॥ २१

हृचाः । चित् । मे । अभिऽपित्वे । अररणुः ।

गां । भजंत । मेहना । अश्वं । भजंत । मेहना ॥ २१

मे ममाभिपित्वे पूर्वोक्ते धनेऽभिप्राप्ते सति हृचाश्चित् हृचा अप्यरारणुः । अशब्द-यन् । कथमिति तदाह । इम ऋषयो मेहना मंहनीयां प्रशस्यां गां भजंतः । अगुंग । अलभंत । मेहना मंहनीयमश्वं च भजंत । अलभंतेति ॥ गामश्वमिति जात्यभिप्रायमेकवचनं ॥ यद्वा मेहनेति म इह नेति पदत्रयात्मकमेकं पदं । यदाह यास्कः । यदिंद्र चित्रं चायनीयं मंहनीयं धनमस्ति । यन्म इह नास्तीति वा त्रीणि मध्यमानि पदानि ॥ तदेवं व्याख्यायं । इव ऋषयो गामश्वं चाभजंत । इदानीमाजनि प्रशस्तस्य धनस्य तद्दानं मम गतोऽन्यस्य नासीदिति हृचप्रमुखा सर्वेऽपि जनाः प्रोचुरित्यर्थः ॥

॥ इति पंचमस्य सप्तमे त्रयस्त्रिंशो वर्गः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण

सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये

पंचमाष्टके सप्तमोऽध्यायः समाप्तः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

अथाष्टमो व्याख्यातमारभ्यते । अष्टमे मंडले प्रथमेऽनुवाके चत्वारि सूक्तानि व्याकृतानि । दूरादित्येकोनचत्वारिंशदृचं पंचमं सूक्तं काण्वगोत्रस्य ब्रह्मातिथेरार्षं । आदितः षट्त्रिंशद्गायत्र्यः । ततो द्वे बृहत्यौ । अंतिमानुष्टुप् । अंत्येषु पंचस्वर्द्धर्चेषु चैद्यस्य कशुनाम्नो राज्ञो दानं स्तूयते । अतस्तद्देवताकाः । शिष्टा आश्विन्यः । तथा चानुक्रांतं । दूरादेकाद्नचत्वारिंशद्ब्रह्मातिथिराश्विनं द्विबृहत्यनुष्टुबंतमंत्याः पंचार्द्धर्चाश्चैद्यस्य कशोर्दानस्तुतिरिति ॥ प्रातरनुवाक आश्विनशस्त्रयोराश्विने क्रतौ गायत्रे छंदस्यंत्यतृचवर्जमिदं सूक्तं । सूत्र्यते हि । दूरादिहेवेति तिस्र उत्तमा उद्धरेत् । आ० ४. १५. । इति ॥

॥ तत्र प्रथमा ॥

दूरादिहेव यत्सत्यरुणप्सुरशिश्वितत् ।

वि भानुं विश्वधातनत् ॥ १

दूरात् । इहऽइव । यत् । सती । अरुणऽप्सुः । अशिश्वितत् ।

वि । भानुं । विश्वधा । अतनत् ॥ १

दूरात् दूरत एवविप्रकृष्ट एव नभसः प्राक्प्रदेशे वर्तमानेहेव सतीह समीपे विद्यमानेव ॥ अस्तेः शतरि अस्तोरल्लोप उगितश्चेति ङीप् । शतुरनुम इति नद्या उदात्तत्वं ॥ अरुणप्सुः आरोचमानरूपा । ईदृश्युषा यद्यदाशिश्वितत् अश्वेतयत् ॥ श्विता वर्णे । अस्माण्ण्यंतात् लुङि चङि रूपं । यद्वृत्तान्नित्यमिति निघातप्रतिषेधः ॥ तदा भानुं दीप्तिं विश्वधा बहुविधं व्यतनत् । विस्तारितवती ॥ तनोतेर्व्यत्ययेन शप् ॥ ईदृशीमुषसं हे अश्विनौ सचेथे इत्युत्तरयैकवाक्यता । यद्वा प्रातरनुवाक्य उषस्येन कांडेनोषा स्तुता सती प्रादुरभूत् । हे अश्विनौ शंसिष्यमाणमाश्विनं क्रतुं श्रोतुं युवामपि प्रादुर्भवतमित्यध्याहारेण वाक्यं पूरणीयं ॥

॥ अथ द्वितीया ॥

नृवद्दस्रा मनोयुजा रथेन पृथुपाजसा ।

सचेथे अश्विनोषसं ॥ २

नृऽवत् । दस्रा । मनःऽयुजा । रथेन । पृथुऽपाजसा ।

सचेथे इति । अश्विना । उषसं ॥ २

हे दस्रा दस्रौ दर्शनीयौ शत्रूणामुपक्षपयितारौ वा ॥ सुपां सुलुगित्याकारः ॥ ईदृशौ हे अश्विनाश्विनौ नृवत् नृभिर्नेतृभिस्तुल्यं वर्तमानौ युवां ॥ तेन तुल्यमिति प्रथमार्थे वतिः ॥ यद्वा नृवंतौ ॥ नृशब्दान्मतुपश्छांदसत्वं । रन्तुतिसामान्याद्वा छंदसीर इति वत्वं । ङीपश्छांदसो लुक् । पद्मनुड्भ्यां मतुबिति मतुप उदात्तत्वं ॥ ईदृशीमुषसं रथेनात्मीयेन वाहनेन सचेथे । सम्यगागच्छथः ॥ सच समवाये ॥ यद्वा सचतिः सेवनार्थः । सचेथे । सेवेथे । तदाह यास्कः । सचस्वा नः स्वस्तये सेवस्व नः स्वस्तय इति । कीदृशेन रथेन । मनोयुजा मनसैव व्यापारांतरनिरपेक्षेण आरणमात्रेणाश्वैर्युज्यमानेन पृथुपाजसा विस्तीर्णबलेन बहुजेन वा उषसोऽनंतरमश्विनोः स्तूयमानत्वात्तावश्विनौ गच्छत इत्युच्यते ॥

॥ अथ तृतीया ॥

युवाभ्यां वाजिनीवसू प्रति स्तोमा अदृक्षत ।

वाचं दूतो यथोहिषे ॥ ३

युवाभ्यां । वाजिनीवसू इति । वाजिनीऽवसू । प्रति ।

स्तोमाः । अदृक्षत ।

वाचं । दूतः । यथा । ओहिषे ॥ ३

हे वाजिनीवसू । वाजो हविर्लक्षणमन्नं । तद्युक्ता यागक्रिया वाजिनी । तस्यां वसु धनं ययोरस्ति तौ तथोक्तौ । यद्वान्नयुक्तं स्तोतृभ्यो देयं वसु धनं ययोरस्ति तादृशौ । हे अश्विनौ युवाभ्यां स्तोमा अस्माभिः कृतानि स्तोत्राणि प्रत्यदृक्षत ।

प्रतिहर्य्यतां॥ हर्यतेश्छांदसः कर्मणि लुङ्। लिङ्सिचावात्मनेपदेष्विति कित्त्वात्तृज्-द्ध्योरित्यभावः। षत्वकत्वषत्वानि॥ अहं च सद्य येन प्रकारेण दूतः प्रेष्टो वाचं स्वामिनो वाक्यं याचते तथा युवयोः प्रीतिपूर्वं वां वाचमीहिषे॥ पुरुषव्यत्ययः॥ याचे॥ ईहिरत्र याचन इत्यर्थः। व्यत्ययेनात्मनेपदं॥ यद्वा दूतो यथा स्वामिनोक्तां वाचं विदेशस्थमन्यं प्रापयति एवमहमपि स्तुतिरूपां वाचमोहिषे। वहे। युवां प्रापयामि॥ वहेर्व्यत्ययेन मध्यमः छांदसं संप्रसारणं। छंदस्युभयथेत्यार्धधातुकत्वादि-डागमः। यवभावो लघूपधगुणश्च। एङि पररूपमिति पररूपत्वं॥

॥ अथ चतुर्थी॥

पुरुप्रिया ण ऊतये पुरुमंद्रा पुरूवसू।

स्तुषे कण्वासो अश्विना॥ ४

पुरुऽप्रिया। नः। ऊतये। पुरुऽमंद्रा। पुरूवसू इति पुरुऽवसू।

स्तुषे। कण्वासः। अश्विना॥ ४

पुरुप्रिया बहूनां प्रियौ पुरुमंद्रा बहुमदौ बहूनां मादयितारौ वा। यद्वा पुरु बहुलं माद्यंतौ पुरूवसू बहुधनौ। ईदृशावश्विनावश्विनौ नोऽस्माकमूतये रक्षणाय कण्वासः कण्वगोत्रा वयं स्तुषे। स्तुमहे॥ पुरुषवचनयोर्व्यत्ययः॥ यद्वा कण्वास इति पूजार्थं बहुवचनं। ऋषिरात्मानं संबोध्य ब्रूते। हे अंतरात्मन् कण्वासः कण्वगोत्रस्त्वं स्तुषे। अश्विनौ स्तुहि॥

॥ अथ पंचमी॥

मंहिष्ठा वाजसातमेषयंता शुभस्पती।

गंतारा दाशुषो गृहं॥ ५

मंहिष्ठा। वाजऽसातमा। इषयंता। शुभः। पती इति।

गंतारा। दाशुषः। गृहं॥ ५

अंहिष्ठा अंहिष्ठौ मंहनीयौ पूजनीयौ अत्यन्तं दातारौ वा वाजसातमा। वाजोऽन्नं बलं वा। तस्यातिशयेन दातारौ। यद्वा वाजो हविर्लक्षणमन्नं तस्य संभक्तृतमौ॥ सनोतेः सनतेर्वा जनसनेति विट्। विड्वनोरनुनासिकस्यात्त्वं॥ दूषयंता शत्रूणां दूषणं कुर्वंतौ॥ दूषणं तत्करोतीति णिच्। णेरनिट्त्वेन टिलोपे प्राप्ते प्रकृत्यैकाजिति प्रकृतिभावः॥ यद्वा इषयंता इषयंतौ अन्नानि प्रापयंतौ॥ इष गतौ। अस्माद्धेतुमति णिच्। इच्छापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः॥ शुभः शोभनस्य धनस्य उदकस्य वा पती स्वामिनौ॥ षष्ठ्याः पतिपुत्रेति विसर्जनीयस्य सत्वं॥ दाशुषः हविष्पुरोडाशादीनि दत्तवतो यजमानस्य गृहं गंतारा गमनशीला॥ गमेस्ताच्छीलिकस्तृन्। अतो न लोकाव्ययेति कर्मणि षष्ठ्याः प्रतिषेधः॥ ईदृशावश्विनौ स्तुम इति शेषः॥

॥ इति पंचमस्याष्टमे प्रथमो वर्गः॥

॥ अथ षष्ठी॥

ता सुदेवाय दाशुषे सुमेधामवितारिणीं।

घृतैर्गव्यूतिमुक्षतं॥ ६

ता। सुऽदेवाय। दाशुषे। सुऽमेधां। अविऽतारिणीं।

घृतैः। गव्यूतिं। उक्षतं॥ ६

हे अश्विनौ ता तौ तादृशौ युवां सुदेवाय। शोभना देवा येन यष्टव्याः स तथोक्तः॥ बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं॥ तस्मै दाशुषे हविर्दत्तवते यजमानाय॥ तादर्थ्ये चतुर्थी॥ ईदृग्यजमानार्थं सुमेधां शोभनयज्ञामवितारिणीं॥ वितरणं विगमनमपायः। अनपायिनीं॥ नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं॥ ईदृशीं गव्यूतिं। गावो यूयंते संयुज्यंतेऽत्रेति गव्यूतिर्गोसंचारभूमिः॥ गोर्यूतौ छंदसीत्यवादेशः॥ तां घृतैः क्षरणशीलैरुदकैरुक्षतं। सिंचतं उक्ष सेचने॥

॥ अथ सप्तमी॥

आ नः स्तोममुप द्रवत्तूयं श्येनेभिराशुभिः।

यातमश्वेभिरश्विना॥ ७

आ। नः। स्तोमं। उपं। द्रवत्। तूयं। श्येनेभिः। आशुऽभिः।

यातं। अश्वेभिः अश्विना ॥ ७

हे अश्विनाश्विनौ नोऽस्माकं स्तोमं स्तोत्रमश्वेभिरश्वैः। द्रवत् तूयमित्युभे चिप्र॰नामनी। एकः पूरकः। तूयं चिप्रमुपायातं। उपगच्छतं। यद्वा द्रवदिति स्तोम॰विशेषणं। द्रवत् शीघ्रं प्रवर्तमानं स्तोममित्यर्थः। कीदृशैरश्वैः। श्येनेभिः शंसनीय॰गामिभिः प्रशस्यगमनैराशुभिः शीघ्रगैः॥

॥ अथाष्टमी ॥

येभिस्तिस्रः परावतो दिवो विश्वानि रोचना।

त्रीँरक्तून्परिदीयथः ॥ ८

येभिः। तिस्रः। पराऽवतः। दिवः। विश्वानि। रोचना।

त्रीन्। अक्तून्। परिऽदीयथः ॥ ८

हे अश्विनौ तिस्रो दिवस्त्रीन्दिवसान् त्रीनक्तून् तिस्रो रात्रीश्च॥ अत्यंतसंयोगे द्वितीया॥ एतावंतं कालं विश्वानि सर्वाणि व्याप्तानि या रोचना रोचमानानि नक्षत्राणि देवगृहाणि परावतो दूरदेशाद्येभिर्यैरश्वैः परिदीयथः परिगच्छथः। दीयतिर्गतिकर्मा॥ तैरस्मत् स्तोत्रमुपयातमिति पूर्वत्रान्वयः॥

॥ अथ नवमी ॥

उत नो गोमतीरिष उत सातीरहर्विदा।

वि पथः सातये सितं ॥ ९

उत। नः। गोऽमतीः। इषः। उत। सातीः। अहःऽविदा।

वि। पथः। सातये। सितं ॥ ९

उतापि च हे अहर्विदा अह्नो लंभयितारौ। यद्वाऽह्नि प्रभातसमये वेदितव्यौ स्तोतव्यौ नोऽस्मभ्यं गोमतीर्बह्वीभिर्गोभिर्युक्ता इषोऽन्नानि दत्तमिति शेषः। उतापि च सातौ संभजनीया दातव्या वा रायस्मभ्यं दत्तं॥ सनतेः सनं नेर्वा कर्मणि क्तिन्। जनसनखनामित्यात्वं। ऊतियूतीत्यादिना क्तिन उदात्तत्वं निपात्यते॥ अपि चास्माकं सातय उक्तानां गवादीनां लाभाय संभजनाय वा पथस्तदुपायरूपा-न्मार्गान् वि षितं। विशेषेण बध्नीतं। यथान्ये न प्रविशंति तथा कुरुतमित्यर्थः॥ षिञ् बंधने। छांदसो विकरणस्य लुक्। यद्वोपसर्गवशादयं धातुः स्वार्थविपरीते बंधनाभावे वर्तते। प्रकरणं प्रस्थानमिति यथा॥ पथो मार्गान् विषितं। विमुंचतं। प्रदर्शयतमित्यर्थः॥ पथिन्शब्दोऽंतोदात्तः। तस्य भस्य टिलोप उदात्तनिवृत्ति-स्वरेण शस उदात्तत्वं॥

॥ अथ दशमी ॥

आ नो गोमंतमश्विना सुवीरं सुरथं रयिं।

वोळ्हमश्वावतीरिषं॥ १०

आ। नः। गोऽमंतं। अश्विना। सुऽवीरं। सुऽरथं। रयिं।

वोळ्हं। अश्वंऽवतीः। इषः॥ १०

हे अश्विनाश्विनौ नोऽस्मभ्यं रयिं धनमावोळ्हं। आवहतं। आहरतं वहेर्लोटि छांदसः शपो लुक्। ढत्वधत्वष्टुत्वढलोपेषु कृतेषु सहिवहोरोदवर्णस्येत्योत्वं॥ कीदृशं रयिं। गोमंतं बह्वीभिर्गोभिर्युक्तं सुवीरं। वीर्यात्जाय इति वीराः पुत्राः। शोभ-नैस्तैरुपेतं। विविधमीरयंति शत्रूनिति वा वीराः शूराः। तैरुपेतं। सुरथं शोभन-रथेन युक्तं। अपि चाश्वावतीरश्वयुक्ताः॥ मंत्रे सोमाश्वेति मतौ दीर्घः॥ इषः इष्यमाणान्यन्नानि चास्मभ्यमावहतं॥

॥ इति पंचमस्याष्टमे द्वितीयो वर्गः॥

द्विदेवत्यस्याश्विनग्रहस्य वाहधानेत्येषा याज्या। सूत्रितं हि। होता यक्षदश्विना नासत्या वाहधाना शुभस्पती। आ० ५, ५, । इति॥

॥ सैकादशी ॥

वावृधाना शुभस्पती दस्रा हिरण्यवर्तनी।
पिबतं सोम्यं मधु ॥ ११

वावृधाना। शुभः। पती इति। दस्रा।
हिरण्यवर्तनी इति हिरण्यऽवर्तनी।
पिबतं। सोम्यं। मधु ॥ ११

हे शुभस्पती शुभः शोभनस्यालंकारस्योदकस्य वा पती स्वामिनौ हे अश्विनौ॥ सुबामन्त्रित इति षष्ठ्यन्तस्य पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्याष्टमिकं सर्वानुदात्तत्वं॥ दस्रा दर्शनीयौ शत्रूणामुपक्षपयितारौ वा हिरण्यवर्तनी हिरण्मयमार्गौ। यद्वा वर्ततेऽस्मिन्निति वर्तनी रथः। हिरण्मयो रथो ययोस्तौ। यद्वा वर्तनि वर्तनमाचरणं। हितरमणीयाचरणौ। वावृधाना प्रवृद्धौ॥ वृधेर्लिटः कानच्॥ ईदृशौ युवां सोम्यं सोममयं मधु माधुर्योपेतं मदकरं वा रसं पिबतं॥

॥ अथ द्वादशी ॥

अस्मभ्यं वाजिनीवसू मघवद्भ्यश्च सप्रथः।
छर्दिर्यंतमदाभ्यं ॥ १२

अस्मभ्यं। वाजिनीवसू इति वाजिनीऽवसू। मघवत्ऽभ्यः।
च। सऽप्रथः।
छर्दिः। यंतं। अदाभ्यं ॥ १२

हे वाजिनीवसू। वाजिनी हविर्युक्ता यागक्रिया। तस्यां वसु धनं हविर्भागलक्षणं ययोस्तथाविधौ हे अश्विनावस्मभ्यं स्तोतृभ्यो मघवद्भ्यः। मघं धनं हविर्लक्षणं। तद्वद्भ्यो यजमानेभ्यश्च सप्रथः सर्वतः पृथु विस्तीर्णमदाभ्यं केनाप्यहिंस्यं छर्दिः। गृहनामैतत्। गृहं यंतं। नियच्छतं दत्तमिति यावत्। यमेश्छांदसः शपो लुक्। छंदस्युभयथेत्यार्द्धधातुकत्वेन ङित्त्वाभावादनुनासिकलोपाभावः॥

॥ अथ त्रयोदशी ॥

नि षु ब्रह्म जनानां याविष्टं तूयमा गतं ।

मो ष्व१न्याँ उपारतं ॥ १३

नि । सु । ब्रह्म । जनानां । या । अविष्टं । तूयं । आ । गतं ।

मो इति । सु । अन्यान् । उप । अरतं ॥ १३

हे अश्विनौ या यौ युवां जनानां प्राणिनां मध्ये ब्रह्म ब्राह्मणजातिं सु सुष्टु नितरामविष्टं अरक्षिष्टं । यद्वा जनानां यजमानानां ब्रह्म परिवृढं स्तोत्रं हविर्लक्षणमन्नं वा यौ युवां न्यविष्टं न्यगच्छतं ॥ अवतिर्गत्यर्थः ॥ तौ युवां तूयं क्षिप्रमागतं । अस्मानभ्यागच्छतं । अन्यानस्मद्व्यतिरिक्तान्यागानान् मो मैव सूपारतं । उपगमतं । कदाचिदपि मैव प्राप्नुतमित्यर्थः ॥ अर्तेर्माङि लुङि सर्तिशास्त्यर्तिभ्यश्चेति च्लेरङादेशः ॥

आपराह्णिके प्रवर्ग्ये समंस्य हविषोऽस्य पिबतमिति द्वितीया याज्या । सूत्रितं च । अस्य पिबतमाश्विनेति वा प्रेषितो होता । आ० ४. ७. । इति ॥

॥ सैषा सूक्ते चतुर्दशी ॥

अस्य पिबतमश्विना युवं मदस्य चारुणः ।

मध्वो रातस्य धिष्ण्या ॥ १४

अस्य । पिबतं । अश्विना । युवं । मदस्य । चारुणः ।

मध्वः । रातस्य । धिष्ण्या ॥ १४

हे अश्विनाश्विनौ हे धिष्ण्या । धिषणा स्तुतिः । तदर्हौ युवं युवां मदस्य मदकरस्य चारुणः शोभनस्य रातस्यास्माभिर्दत्तस्यास्य मध्वो मधुरस्य सोमस्य स्वांशलक्षणं भागं पिबतं ॥ यद्वा द्वितीयार्थे षष्ठी ॥ इमं सोमं पिबतं ॥

॥ अथ पंचदशी ॥

अस्मे आ वहतं रयिं शतवंतं सहस्रिणं ।

पुरुक्षुं विश्वधायसं ॥ १५

अस्मे इति । आ । वहतं । रयिं । शतऽवंतं । सहस्रिणं ।

पुरुऽक्षुं । विश्वधायसं ॥ १५

हे अश्विनावस्मे अस्मभ्यं रयिं धनमावहतं । आनयतं । कथंभूतं । शतवंतं शतसंख्योपेतं सहस्रिणं सहस्रसंख्योपेतं च पुरुक्षुं बहुनिवासं यद्वा पुरुभिर्बहुभिः स्तुत्यं विश्वधायसं विश्वेषां सर्वेषामस्मदीयानां धारकं ॥ क्षियो वाक्षु अस्मक्षुं दसीति इधातेरसुन् । णिदित्यनुवृत्तेर्णिद्वद्भावेन युगागमः ॥

॥ इति पंचमस्याष्टमे तृतीयो वर्गः ॥

॥ अथ षोडशी ॥

पुरुत्रा चिद्धि वां नरा विह्वयंते मनीषिणः ।

वाघद्भिरश्विना गतं ॥ १६

पुरुऽत्रा । चित् । हि । वां । नरा । विऽह्वयंते । मनीषिणः ।

वाघत्ऽभिः । अश्विना । आ । गतं ॥

हे नरा नरौ स्तोतॄणां धर्मस्य नेताराविश्विनौ मनीषिणो मनस ईशितारः स्तोतारो वां युवां पुरुत्रा चिद्धि बहुषु हि देशेषु विह्वयंते । विविधमाह्वयंति । तथा सति हे अश्विनौ वाघद्भिर्वाहकैरश्वैरागतं । अस्मानेवागच्छतं ॥

॥ अथ सप्तदशी ॥

जनासो वृक्तबर्हिषो हविष्मंतो अरंकृतः ।

युवां हवंते अश्विना ॥ १७

जनासः। वृक्तऽबर्हिषः। हविष्मन्तः। अरंऽकृतः।

युवां। हवंते। अश्विना ॥ १७

वृक्तबर्हिषः। वृक्तं छिन्नं बर्हिर्यैस्ते तथोक्ताः। हविष्मंतो हविर्भिर्युक्ता अरंकृतः पर्याप्तकारिणः। यद्वा हविरादीनामलंकर्तारो जनास ऋत्विग्लक्षणा जना हे अश्विनाश्विनौ युवां हवंते। आह्वयंति। अत आगच्छतमिति शेषः ॥

॥ अथाष्टादशी ॥

अस्माकमद्य वामयं स्तोमो वाहिष्ठो अंतमः।

युवाभ्यां भूत्वश्विना ॥ १८

अस्माकं। अद्य। वां। अयं। स्तोमः। वाहिष्ठः। अंतमः।

युवाभ्यां। भूतु। अश्विना ॥ १८

अद्येदानीमस्माकमयं स्तोमोऽस्मदीयं स्तोत्रं हे अश्विनौ वां युवयोर्वाहिष्ठो वाढृवितृतमः प्रापयितृतमः सन् युवाभ्यामंतमोंऽतिकतमोऽतिशयेन समीपवर्ती भूतु। भवतु ॥ तमे तादेश्चेत्यंतिकशब्दस्य तादिलोपः। भवतेश्छांदसः शपो लुक् ॥

॥ अथैकोनविंशी ॥

यो ह वां मधुनो दृतिराहितो रथचर्षणे।

ततः पिबतमश्विना ॥ १९

यः। ह। वां। मधुनः। दृतिः। आऽहितः। रथऽचर्षणे।

ततः। पिबतं। अश्विना ॥ १९

हे अश्विनाश्विनौ रथचर्षणे रथस्य वर्षणि दृष्टव्ये मध्ये देशे यो दृतिर्मधुनो मधुरस्याभिर्दंतस्य सोमस्य संबंधी तेन मधुना पूर्ण आहितः स्थापितो वर्तते तस्माद् दृतेः सकाशात्सोमं पिबतं ॥

॥ अथ विंशी ॥

तेनं नो वाजिनीवसू पश्वे तोकाय शं गवें ।

वहंतं पीवरीरिषः ॥ २०

तेनं । नः । वाजिनीवसू इति वाजिनीऽवसू । पश्वे । तोकाय ।

शं । गवें ।

वहंतं । पीवरीः । इषः ॥ २०

हे वाजिनीवसू । वाजोऽन्नं बलं वा । तद्युक्तधनौ नोऽस्माकं पश्वे पशवेऽस्थ्यादिष्वचनाय ॥ जस्यादिषु छंदसि वावचनमिति घेर्ङितीति गुणस्य विकल्पितत्वाद्यण् ॥ तोकाय पुत्राय गवे च ॥ जात्यभिप्रायं सर्वत्रैकवचनं ॥ पशुपुत्रगवां शं सुखं यथा भवति तथा पीवरीः प्रवृद्धानीषोऽन्नानि तेन भवदीयेन रथेन वहतं । आवहतं । प्रापयतं । दत्तमित्यर्थः ॥

॥ इति पंचमस्याष्टमे चतुर्थो वर्गः ॥

॥ अथैकविंशी ॥

उत नो दिव्या इषं उत सिंधूँरहर्विदा ।

अप द्वारेव वर्षथः ॥ २१

उत । नः । दिव्याः । इषः । उत । सिंधून् । अहःऽविदा ॥

अपं । द्वाराऽइव । वर्षथः ॥ २१

उतापि च हे अहर्विदा अह्नां लंभयितारौ । यद्वाह्निः प्रभातसमये वेदितव्यौ स्तोतव्यावश्विनौ दिव्या दिवि भवा इष इष्यमाणा अपो नोऽस्मदर्थं द्वारेव द्वारैरिव छिद्रैर्वापवर्षथः । मेघादपवर्ष्य युवां सिंचथः । उतापि च सिंधून् स्यंदनशीला नदीर्वृष्टैस्तैरुदकैरस्माकं स्नानपानादिकार्याय कृतवंताविस्यर्थः ॥

॥ अथ द्वाविंशी ॥

कदा वां तौग्र्यो विधत्समुद्रे जहितो नरा ।

यद्वां रथो विभिष्पतात् ॥ २२

कदा । वां । तौग्र्यः । विधत् । समुद्रे । जहितः । नरा ।

यत् । वां । रथः । विऽभिः । पतात् ॥ २२

हे नरा नरौ नेतारावश्विनौ तौग्र्यस्तुग्रपुत्रो भुज्युः समुद्रे जले जहितोऽसुरैः प्रक्षिप्तः सन् कदा कस्मिन्काले वां युवां विधत् । अविधत् । स्तुतिभिः पर्यचरत् ॥ यद्यदा वां युवयोर्विभिर्गन्तृभिरश्वैरुपेतो रथः पतात् तं भुज्युमानेतुं पतेत् गच्छेत् तदानीं भुज्युरस्तौदिति पूर्वपादेन दृष्टस्य प्रतिवचनं ॥

॥ अथ त्रयोविंशी ॥

युवं कण्वाय नासत्यापिरिप्ताय हर्म्ये ।

शश्वदूतीर्दशस्यथः ॥ २३

युवं । कण्वाय । नासत्या । अपिऽरिप्ताय । हर्म्ये ।

शश्वत् । ऊतीः । दशस्यथः ॥ २३

हे नासत्या सत्यौ साधू सत्यौ । न सत्यावसत्यौ । न असत्यौ नासत्यौ ॥ नभ्राण्नपादिति नञः प्रकृतिभावः ॥ यद्वा सत्यस्य नेतारौ नासिकाप्रभवौ वा । उक्तं च भगवता यास्केन । सत्यावेव नासत्यावित्यौर्णवाभः । सत्यस्य प्रणेतारावित्याग्रायणः । नासिकाप्रभवौ वेति । तौ युवां कण्वायैतत्संज्ञाय ऋषये हर्म्ये हर्म्यस्थलेऽपिरिप्तायाबाधिताय शश्वत् शश्वतीर्बह्वीरूतीः रक्षा दशस्यथः । दत्तवन्तौ । युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं । ऋग्वे० १. ११८. ७. । इत्यत्रेतिहासः उक्तः । सोऽत्र द्रष्टव्यः ॥

॥ अथ चतुर्विंशी ॥

ताभिरा यातमूतिभिर्नव्यसीभिः सुशस्तिभिः ।

यद्वां वृषण्वसू हुवे ॥ २४

ताभिः । आ । यातं । ऊतिऽभिः । नव्यसीभिः । सुशस्तिऽभिः ॥

यत् । वां । वृषण्वसू इति वृषण्ऽवसू । हुवे ॥ २४

हे वृषण्वसू वर्षणधनौ ॥ वृषण्वस्वश्वयोरुपसंख्यानमिति णत्वाभावो निपात्यते ॥ तदानीं ताभिः पूर्वोक्ताभिर्नव्यसीभिर्नवतराभिः सुवृक्तिभि सुप्रशस्ताभिरूतिभी रक्षाभिः सार्धं सायातं । आ गच्छतं यद्वा वां हुवे स्तुतिभिराह्वयामि ॥

॥ अथ पंचविंशी ॥

यथा॑ चित्कण्वमाव॑तं प्रियमे॑धमुपस्तुतं ।

अत्रिं॑ शिंजार॑मश्विना ॥ २५

यथा॑ । चित् । कण्व । आव॑तं । प्रियऽमे॑धं । उपऽस्तुतं ।

अत्रिं॑ । शिंजारं॑ । अश्विना ॥ २५

हे अश्विनाश्विनौ यथा चिद्येन खलु प्रकारेण कण्वमेतन्नामानमृषिमावतं अरक्षतं । प्रियमेधं प्रिययज्ञमेतन्नामानं चोपस्तुतमेवनामानं च शिंजारं शब्दयंतं स्तुवंतमत्रिमेतन्नामानमृषींश्च येन प्रकारेणारक्षतं तथास्मानपि रक्षतमिति शेषः । यद्वैताभ्यां वृषण्वसू इत्यनयैकवाक्यता ॥

॥ इति पंचमस्याष्टमे पंचमो वर्गः ॥

॥ अथ षड्विंशी ॥

यथोत कृत्व्ये धने॑ऽंशुं गोष्वगस्त्यं॑ ।

यथा वाजे॑षु सोभ॑रिं ॥ २६

यथा॑ । उत । कृत्व्ये॑ । धने॑ । अंशुं । गोषु॑ । अगस्त्यं॑ ।

यथा॑ । वाजे॑षु । सोभ॑रिं ॥ २६

उतापि च यथा येन प्रकारेण धने लब्धे कर्तव्ये प्राप्तव्ये सत्यंशुमेतन्नामानं स्तोतारमावतं अरक्षतं । गोषु च लब्धव्यासु यथागस्त्यमृषिमरक्षतं । वाजेष्वन्नेषु लब्धव्येषु यथा येन प्रकारेण सोभरिमेतन्नामानमृषिं चारक्षतं अत्रापि पूर्ववद्वाक्यशेषेण उत्तरयैकवाक्यता वा ॥

॥ अथ सप्तविंशी ॥

एतावद्वां वृषण्वसू अतो वा भूयो अश्विना ।

गृणन्तः सुम्नमीमहे ॥ २७

एतावत् । वां । वृषण्वसू इति वृषण्ऽवसू । अतः । वा ।

भूयः । अश्विना ।

गृणन्तः । सुम्नं । ईमहे ॥ २७

हे वृषण्वसू वर्षणधनावश्विनाश्विनौ गृणन्तः स्तुवन्तो वयमेतावत् यथा चित् कण्वमित्यादिना यावदनुक्रान्तमेतत्परिमाणं सुम्नं सुखमतो वास्माद्वा भूयो बहुतरमधिकं सुम्नं वा युवामीमहे । याचामहे ॥

॥ अथाष्टाविंशी ॥

रथं हिरण्यवन्धुरं हिरण्याभीशुमश्विना ।

आ हि स्थाथो दिविस्पृशं ॥ २८

रथं । हिरण्यऽवन्धुरं । हिरण्यऽअभीशुं । अश्विना ।

आ । हि । स्थाथः । दिविऽस्पृशं ॥ २८

हे अश्विनाश्विनौ हिरण्यवन्धुरं । सारथिस्थानं वन्धुरं हिरण्मयसारथिस्थानं हिरण्याभीशुं हिरण्मयप्रग्रहं दिविस्पृशमत्युन्नतत्वाद्दिवं स्पृशन्तं ॥ स्पृशेः क्विन् । दिव्शब्दात् द्वितीयार्थे सप्तमी हृद्द्युभ्यां ङेरुपसंख्यानमित्यलुक् ॥ ईदृशं रथमा हि स्थाथः । युवामातिष्ठथ एव । हिरवधारणे । अस्मदीयां स्तुतिं श्रोतुं शीघ्रं रथमास्थायागतमिति भावः ॥ ष्ठा गतिनिवृत्तौ । लटि छान्दसः शपो लुक् ॥

॥ अथैकोनत्रिंशी ॥

हिरण्ययी वां रभिरीषा अक्षो हिरण्ययः ।

उभा चक्रा हिरण्यया ॥ २९

हिरण्ययी । वां । रभिः । ईषा । अक्षः । हिरण्ययः ॥
उभा । चक्रा । हिरण्यया ॥ २९

हे अश्विनौ वां युवयो रभिः रथस्यालंभनभूता रथस्येषा हिरण्ययी हिरण्मयी हिरण्यविकारा । अक्षश्च हिरण्ययो हिरण्मयो हिरण्यनिर्मितः । ईषा अक्षादिषु छंदसीति प्रकृतिभावः ॥ अपि चोभाभे द्वे अपि चक्रा चक्रे रथचरणे हिरण्यया हिरण्मये सुवर्णनिर्मिते ॥ सुपां सुलुगिति द्विवचनस्याकारः । ऋत्व्यवास्त्व्यवास्त्व इत्यादिना हिरण्मयशब्दान्मयटो मलोपो निपात्यते ॥

॥ अथ त्रिंशी ॥

तेन नो वाजिनीवसू परावतश्चिदा गतं ।
उपेमां सुष्टुतिं मम ॥ ३०

तेन । नः । वाजिनीवसू इति वाजिनीवसू । पराऽवतः ।
चित् । आ । गतं ।
उप । इमां । सुऽस्तुतिं । मम ॥ ३०

हे वाजिनीवसू अन्नवन्तावश्विनौ य उक्तो हिरण्मयसर्वावयवो रथः तेन रथेन नोऽस्मान् परावतश्चित् दूरदेशादप्यागतं । आगच्छतं ॥ गतमिति छांदसः शपो लुक् । अनुदात्तोपदेशेत्यनुनासिकलोपः ॥ इदानीमृषिरेकवदाह । मम मदीयामिमामिदानीं क्रियमाणां सुष्टुतिं शोभनां स्तुतिं चोपगच्छतं ॥

॥ इति पंचमस्याष्टमे षष्ठो वर्गः ॥

॥ अथैकत्रिंशी ॥

आ वहेथे पराकात्पूर्वीरश्नंतावश्विना ।
इषो दासीरमर्त्या ॥ ३१

आ । वहेथे इति । पराकात् । पूर्वीः । अश्नंतौ । अश्विना ।
इषः । दासीः । अमर्त्या ॥ ३१

हे अमर्त्यौ मरणवर्जितावश्विनावश्विनौ दासोः । दासा उपक्षपयितारोऽसुराः । तत्संबंधिनीः पूर्वीः पुरीरघ्नंतौ अश्नथयंतौ भंजंतौ युवामिषोऽन्नानि पराकात् परागताद्दूरदेशादव हेथे । अस्मान्प्रापयथः । यद्वाघ्नंतौ व्याप्नुवंतौ ॥ अश्नू व्याप्तौ । अस्माद्व्यत्ययेन शप् परस्मैपदं च ॥ पूर्वीर्बह्वीर्दासीर्दासस्योपक्षपयितुः शत्रोः संबंधिनीरिषोऽन्नानि शत्रुभ्योऽपहृत्यास्मान्प्रापयथः ॥

॥ अथ द्वात्रिंशी ॥

आ नो द्युम्नैरा श्रवोभिरा राया यातमश्विना ।

पुरुश्चंद्रा नासत्या ॥ ३२

आ । नः । द्युम्नैः । आ । श्रवःऽभिः । आ । राया ॥ यातं । अश्विना ।

पुरुऽचंद्रा । नासत्या ॥ ३२

हे पुरुश्चंद्रा बहुहिरण्यौ । यद्वा पुरूणां बहूनामाह्लादकौ ह्रस्वाच्चंद्रोत्तरपदे मंत्र इति सुट् । पादादित्वात् षाष्ठिकमामंत्रिताद्युदात्तत्वं ॥ हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ नासिकाप्रभवौ वा ॥ आमंत्रितं पूर्वमविद्यमानवदिति पूर्वस्यामंत्रितस्याविद्यमानवद्भावादिदमप्यामंत्रितमाद्युदात्तं । न च नामंत्रिते समानाधिकरण इत्यविद्यमानवत्त्वनिषेधः पुरुश्चंद्रेत्यस्य विशेषवचनत्वात् ॥ ईदृशौ हे अश्विनावश्विनौ द्युम्नैर्द्योतमानैरदातव्यैः सार्धं नोऽस्मानायातं । आगच्छतं । तथा श्रवोभिः श्रवणीयैर्यशोभिरस्मानागच्छतं । तथा राया धनेन चास्मानागच्छतं ॥

॥ अथ त्रयस्त्रिंशी ॥

एह वां प्रुषितप्सवो वयो वहंतु पर्णिनः ।

अच्छा स्वध्वरं जनं ॥ ३३

आ । इह । वां । प्रुषितऽप्सवः । वयः । वहंतु । पर्णिनः ।

अच्छ । सुऽअध्वरं । जनं ॥ ३३

हे अश्विनाविहास्मिन्यागे वा युवां प्रुषितप्सवः ॥ प्रुषिः स्नेहनकर्मा ॥ स्निग्धरूपाः पर्णिनः पक्षोपेताः । यद्वा लुप्तोपममेतत् । पक्षिण इव शीघ्रगामिनो वयो गंतारोऽश्वाः स्वध्वरं शोभनयागं यजमानलक्षणं जनमच्छाभिमुख्येनावहंतु । आनयंतु ॥

॥ अथ चतुस्त्रिंशी ॥

रथं वामनुगायसं य इषा वर्तते सह ।

न चक्रमभि बाधते ॥ ३४

रथं । वां । अनुऽगायसं । यः । इषा । वर्तते । सह ।

न । चक्रं । अभि । बाधते ॥ ३४

हे अश्विनौ यो रथोऽस्मभ्यं देयेनान्नेन सह वर्तते वां युवयोः स्वभूतमनुगायसं स्तोतृभिरनुगातव्यं तं रथं चक्रं परसैन्यं नाभिबाधते । नाभिहंति । यद्वा चक्रं वीर्यकर्मसाधनं ॥ घञर्थे कविधानमिति कः । कृञादीनां क इति द्विर्वचनं । अस्मिन्पक्षेऽन्य शत्रुरिति कर्तृपदमध्याहर्तव्यं ॥

॥ अथ पंचत्रिंशी ॥

हिरण्ययेन रथेन द्रवत्पाणिभिरश्वैः ।

धीजवना नासत्या ॥ ३५

हिरण्ययेन । रथेन । द्रवत्पाणिऽभिः । अश्वैः ।

धीऽजवना । नासत्या ॥ ३५

हे धीजवना मनोवेगवंतौ ॥ आमंत्रिताद्युदात्तत्वं ॥ हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ वा ॥ आमंत्रितं पूर्वमविद्यमानवदिति पूर्वस्याविद्यमानत्वेन पदादपरत्वादाष्टमिकनिघाताभावः । न च नामंत्रितविद्यमानवचनिषेधो धीजवनेत्यस्य विशेषणत्वेन सामान्यवचनत्वाभावात् । व्यावर्तकं हि विशेषणं ॥ ईदृशौ युवां द्रवत्पाणिभिः शीघ्रगमनपदैरश्वैर्युक्तेन हिरण्ययेन हिरण्मयेन स्वर्णमयेन रथेनागतमिति शेषः । यद्वा धीजवना नासत्येत्येतद्द्वयमपि प्रथमांतमेव नामंत्रितं । धियो जव इव जवो ययोस्तौ । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥ ईदृशेन रथेन शीघ्रगमनौ नासत्यावश्विनावागच्छतमिति शेषः ॥

॥ इति पंचमस्याष्टमे सप्तमो वर्गः ॥

॥ अथ षट्त्रिंशी ॥

युवं मृगं जागृवांसं स्वदथो वा वृषण्वसू ।

ता नः पृङ्क्तमिषा रयिं ॥ ३६

युवं । मृगं । जागृऽवांसं । स्वदथः । वा ।

वृषण्वसू इति वृषण्ऽवसू ।

ता । नः । पृङ्क्तं । इषा । रयिं ॥ ३६

वाशब्दः समुच्चये । अपि च हे वृषण्वसू वर्षणधनावश्विनौ युवं युवां जागृवांसं जागरणशीलं स्वकार्ये सावधानं मृगं मृग्यमन्वेषणीयं सोमं स्वदथः । आस्वादयथः । यद्वा जागृवांसं जाग्रतं मृगं मृगनामानमसुरं स्वदथः । स्वादयथः । हिंस्थ इत्यर्थः । ता तौ युवां नोऽस्मदर्थमिषान्नेन रयिं धनं पृङ्क्तं । संपृङ्क्तं । कुरुतं ईदृशं धनमस्मभ्यं प्रयच्छतमित्यर्थः ॥

॥ अथ सप्तत्रिंशी ॥

ता मे अश्विना सनीनां विद्यातं नवानां ।

यथा चिच्चैद्यः कशुः शतमुष्ट्राणां ददत्सहस्रा दश गोनां ॥ ३७

ता । मे । अश्विना । सनीनां । विद्यातं । नवानां ।

यथा । चित् । चैद्यः । कशुः । शतं । उष्ट्राणां । ददत् ।

सहस्रा । दश । गोनां ॥ ३७

हे अश्विनाश्विनौ ता तादृशौ युवां नवानामभिनवानां श्रेष्ठानां सनीनां संभजनीयानां धनानां ॥ कर्मणि षष्ठी ॥ ईदृशानि धनानि मे मह्यं दापयितुं विद्यातं । जानीतं । यथा चित् येन खलु प्रकारेण चैद्यश्चेदिपुत्रः कशुरेतत्संज्ञो राजोष्ट्राणां शतं तथा गोनां गवां दश सहस्रा दशसंख्यानि सहस्राणि ददत् दद्यात् तथा विद्यातमिति पूर्वत्रान्वयः ॥

॥ अथाष्टात्रिंशी ॥

यो मे हिरण्यसंदृशो दश राज्ञो अमंहत ।

अधस्पदा इच्चैद्यस्य कृष्टयश्चर्मम्ना अभितो जनाः ॥ ३८

यः । मे । हिरण्यऽसंदृशः । दश । राज्ञः । अमंहत ।

अधःऽपदाः । इत् । चैद्यस्य । कृष्टयः । चर्मऽम्नाः । अभितः ।

जनाः ॥ ३८

यः कशुश्चैद्यो राजा मे मह्यं हिरण्यसंदृशो हिरण्यसंदर्शनान् हिरण्यसमान-तेजस्कान् दश राज्ञोऽमंहत परिचरणार्थं दत्तवान् । दशसंख्याकान् राज्ञो युद्धे परा-जितान् गृहीत्वा दासत्वेनास्मै दत्तवानित्यर्थः । नन्वीदृशानां बहुविधानां राज्ञां दान एकः कथं शक्नुयादिति तत्राह । कृष्टयः सर्वाः प्रजाश्चास्य चैद्यस्य चेदिपुत्रस्य कशोरधस्पदा इत् पादयोरधस्तादेव वर्तन्ते । न कश्चिदपि तत्समानस्तदधिको वा विद्यते । अभितः सर्वतो वर्तमाना जनाश्चर्मम्नाश्चर्मणयस्य कवचादेर्धारणे कृता-भ्यासाः । यद्वा चर्माणि चरणत्राणान्यश्वादीनि वाहनानि । तेषु गमनाभ्यस्यन्तीति चर्मम्नाः ॥ म्ना अभ्यासे । आतो मनिन्निति विच् ॥ सर्वे मनुष्यास्तस्य भृत्या इत्यर्थः ॥

॥ अथैकोनचत्वारिंशी ॥

माकिरेना पथा गाद्येनेमे यन्ति चेदयः ।

अन्यो नेत्सूरिरोहते भूरिदावत्तरो जनः ॥ ३९

माकिः । एना । पथा । गात् । येन । इमे । यन्ति । चेदयः ।

अन्यः । न । इत् । सूरिः । ओहते । भूरिदावत्ऽतरः ।

जनः ॥ ३९

येन मार्गेण इमे चेदयोऽस्य राज्ञः पितृपितामहादयो यन्ति गच्छन्ति एनानेन पथा मार्गेण माकिर्गात् । अन्यो न गन्तुं शक्नोति । अपि चास्माद्राज्ञोऽन्यो भूरिदावत्तरो बहुदातृतमः सूरिर्विद्वान् नृन् जनो नेत् नैवोहते । वहति । स्तोतृभ्यो धनं

प्रापयति। यद्वा वसुदातृजनो य जनः कशुर्नाम अस्मादरायः॥ व्यत्ययेन प्रथमा॥ न्यग्वं सूरिः स्तोता नेदीयते। नैव याचते॥ ओहियांचञाः कर्गा॥ यथान्यं न याचते तथा वसु धनं प्रयच्छतीत्यर्थः॥

॥ इति पंचमस्याष्टमेऽष्टमो वर्गः॥

॥ इत्यष्टमे मंडले प्रथमोऽनुवाकः॥

द्वितीयेऽनुवाके सप्त सूक्तानि। तत्र महाँ इंद्र इत्यष्टाचत्वारिंशदृचं प्रथमं सूक्तं काण्वस्य वत्सस्यार्षं गायत्रं। अंत्यतृचवर्जमैंद्रं। तस्मिन्परशुनाम्नो राज्ञः पुत्रस्य तिरिंदिरस्य दानं स्तूयते। अतः स तृचस्तद्देवताकः। तथा चानुक्रांतं। महाँ इंद्रोऽष्टाचत्वारिंशद्वत्सस्तृचोंऽत्यस्तिरिंदिरस्य पारशव्यस्य दानस्तुतिरिति। महाव्रते गायत्रतृचाशीतावंत्यतृचवर्जमिदं सूक्तं। तथैव पंचमारण्यके सूत्र्यते। महाँ इंद्रो य ओजसेति तिस्र उत्तमा उद्धरति। ऐ० आ० ५. ९.। इति॥ प्रातःसवने सोमातिरेके महानित्यादिकाः स्तोमातिशंसनार्थाः। सूत्रितं च। महाँ इंद्रो य ओजसा तो देवा अवंतु न इत्यैंद्रीभिर्वैश्वीभिश्च स्तोमातिशस्य। आ० ६. ७.। इति॥ तृतीये पर्याये होतुः शस्त्रे महाँ इंद्र इति तृचोऽनुरूपः। सूत्रितं च। महाँ इंद्रो य ओजसा जगस्य मन्यवे विश इति। आ० ६. ४.। इति॥ अप्तोर्यामे ब्राह्मणोऽतिरिक्तोक्थ्य अयमेव तृचोऽनुरूपः। सूत्र्यते हि। महाँ इंद्रो य ओजसा बृहन्नस्विनैः। आ० ९. ११.। इति॥ दर्शयागे महेंद्रयाजिनः सान्नाय्यस्य महानित्येषानुवाक्या। सूत्र्यते हि। महाँ इंद्रो य ओजसा त्वमस्य मिंद्र ब्राह्मणा महान्। आ० १. ६.। इति॥

॥ सैषा प्रथमा॥

महाँ इंद्रो य ओजसा पर्जन्यो वृष्टिमाँ इव।

स्तोमैर्वत्सस्य वावृधे॥ १

महान्। इंद्रः। यः। ओजसा। पर्जन्यः। वृष्टिमान्ऽइव॥

स्तोमैः। वत्सस्य। ववृधे॥ १

य इंद्र ओजसा बलेन महान् सर्वेभ्योऽधिकः। क इव। वृष्टिमानिव। यथा वृष्ट्या युक्तः पर्जन्यो रसानां पाजयिता देवो महान् स इवेत्यर्थः। स इंद्रो वत्सस्य पुत्रस्यानीयस्य काण्ववंशनाम्न एव ऋषेः स्तोत्रैर्ववृधे। प्रवर्धते॥

॥ अथ द्वितीया ॥

प्रजामृतस्य पिप्रतः प्र यद्भरन्त वह्नयः ।

विप्रा ऋतस्य वाहसा ॥ २

प्रऽजाम् । ऋतस्य । पिप्रतः । प्र । यत् । भरन्त । वह्नयः ।

विप्राः । ऋतस्य । वाहसा ॥ २

ऋतस्य यज्ञस्य सत्यस्य वा प्रजां प्रकर्षेण जातमिन्द्रं पिप्रतो नभसः प्रदेशान् पूरयन्तो वह्नयो वाहका अश्वा यद्यदा प्र भरन्त प्रकर्षेण भरन्ति वहन्ति तदा विप्रा मेधाविन ऋतस्य यज्ञस्य वाहसा प्रापकेण स्तोत्रेण तमिन्द्रं स्तुवन्तीति शेषः ॥

॥ अथ तृतीया ॥

कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनं ।

जामि ब्रुवत आयुधं ॥ ३

कण्वाः । इन्द्रं । यत् । अक्रत । स्तोमैः । यज्ञस्य । साधनं ।

जामि । ब्रुवते । आयुधं ॥ ३

कण्वाः । स्तोतृनामैतत् । स्तोतारः कण्वगोत्रा वेन्द्रं स्तोमैः स्तोत्रैर्यज्ञस्य यागस्य साधनं साधयितारं निष्पादकं यद्यदाक्रत अकुर्वत ॥ करोतेर्लुङि मन्त्रे घसेति च्लेर्लुक् ॥ तदानीमायुधं शत्रूणां हिंसकं वाणादिकं जामि । अतिरेकनामैतत् । अतिरिक्तमहितं प्रयोजनरहितं ब्रुवते । कथयन्ति । आयुधसाध्यस्य सर्वकार्यस्येन्द्रेण कृतत्वादायुधं निष्प्रयोजनमित्यर्थः । यद्वायुधमायोधनशीलमिन्द्रं जामि जामिं भ्रातरं ब्रुवते । वदन्ति । सर्वकार्येषु भ्रातृवद्वर्तत इत्यर्थः ॥

तृतीये पर्याये होतुः शस्त्रे संस्थे मन्यव इत्याद्या द्विचत्वारिंशदृचः । सूत्र्यते हि । समस्य मन्यवे विश इति द्विचत्वारिंशद्विमुज्यते । आ० ६. ४. इति ॥

॥ तत्र प्रथमा सूक्ते चतुर्थी ॥

समस्य मन्यवे विशो विश्वा नमंत कृष्टयः।
समुद्रायेव सिंधवः ॥

सं। अस्य। मन्यवे। विशः। विश्वाः। नमंत। कृष्टयः।
समुद्रायऽइव। सिंधवः ॥ ४

विशो निविशंत्यो विश्वाः सर्वाः कृष्टयः प्रजा अस्येंद्रस्य मन्यवे क्रोधाय। यद्वा मन्युर्मननसाधनं स्तोत्रं। तदर्थं संनमंत। सम्यक् स्वत एव नमंति॥ नमतेः कर्मकर्तरि छांदसो लङ्। न दुहस्नुनमामिति यक्चिणोः प्रतिषेधः॥ प्रह्वीभवंति। तत्र दृष्टांतः। समुद्रायेव। यथा समुद्रमब्धिं प्रति सिंधवः स्यंदनशीला नद्यः स्वयमेव नमंते तद्वत्॥

॥ अथ पंचमी ॥

ओजस्तदस्य तित्विष उभे यत्समवर्तयत्।
इंद्रश्चर्मेव रोदसी ॥ ५

ओजः। तत्। अस्य। तित्विषे। उभे। इति। यत्।
संऽअवर्तयत्।
इंद्रः। चर्मऽइव। रोदसी इति ॥ ५

अस्येंद्रस्य तदोजो बलं तित्विषे। दिदीपे॥ त्विष दीप्तौ॥ यत् येनौजसायमिंद्र उभे रोदसी द्यावापृथिव्यौ चर्मेव समवर्तयत् सम्यग्वर्तयति। यथा कश्चित्किंचिच्चर्म कदाचिद्विस्तारयति कदाचित्संकोचयति एवं तदधीने अभूतामित्यर्थः॥

॥ इति पंचमस्याष्टमे नवमो वर्गः॥

॥ अथ षष्ठी ॥

वि चिद्वृत्रस्य दोधतो वज्रेण शतपर्वणा।
शिरो बिभेद वृष्णिना ॥ ६

वि । चित् । वृत्रस्य । दोधतः । वज्रेण । शतऽपर्वणा ।

शिरः । बिभेद । वृष्णिना ॥ ६

चिच्छब्दोऽप्यर्थे। स च भिन्नक्रमः। वृत्रस्य चिदावरकस्यापि दोधतोऽत्यर्थं जगत्कंपयतोऽसुरस्य शिरो मूर्धानं शतपर्वणा शतसंख्यापर्वोपेता धारा यस्य तादृशेन वृष्णिना वीर्यवता वज्रेणेन्द्रो विबिभेद। विचिच्छेद ॥

आभिप्लविकेषूक्थ्येषु तृतीयसवने प्रशास्तुः शस्त्र इमा अभीति तृचो वैकल्पिकोऽनुरूपः। सूत्रितं च। इमा अभि प्र णोनुम इत्यय ब्राह्मणाच्छंसिनः। आ० ७. ८.। इति ॥

॥ तत्र प्रथमा सूक्ते सप्तमी ॥

इमा अभि प्र णोनुमो विपामग्रेषु धीतयः ।

अग्नेः शोचिर्न दिद्युतः ॥ ७

इमाः । अभि । प्र । नोनुमः । विपां । अग्रेषु । धीतयः ।

अग्नेः । शोचिः । न । दिद्युतः ॥ ७

विपां स्तोतॄणामग्रेषु पुरस्तादिमा अस्मदीया धीतयो धियः स्तोत्राण्यभि प्र णोनुमः। आभिमुख्येन पुनः पुनः शब्दायामः ॥ णु शब्दे ॥ कीदृशीः स्तुतीः। अग्नेः शोचिर्न दीप्तिरिव दिद्युतो दीप्यमाना वेदरूपाः ॥

॥ अथाष्टमी ॥

गुहा सतीरुप त्मना प्र यच्छोचन्त धीतयः ।

कण्वा ऋतस्य धारया ॥ ८

गुहा । सतीः । उप । त्मना । प्र । यत् । शोचन्त । धीतयः ।

कण्वाः । ऋतस्य । धारया ॥ ८

गुहा गुहायां सतीः सत्यो भवंत्यो यत् या धीतयः स्तुतयः कर्माणि वाऽऽत्मनाऽऽत्मना स्वेनेंद्रेणोपगम्यमानाः प्रशोचंत प्रादीप्यंत । यद्वात्मना स्वत एवेंद्रमुपगच्छंतः प्रदीप्यंते ताः स्तुतीः कण्वाः कण्वगोत्रा ऋषयः ऋतस्योदकस्य सोमात्मकस्य धारया सहिताः कुर्वंतीति शेषः ॥

॥ अथ नवमी ॥

प्र तमिंद्र नशीमहि रयिं गोमंतमश्विनं ।

प्र ब्रह्म पूर्वचित्तये ॥ ९

प्र । तं । इंद्र । नशीमहि । रयिं । गोऽमंतं । अश्विनं ।

प्र । ब्रह्म । पूर्वऽचित्तये ॥ ९

हे इंद्र गोमंतं गोभिर्युक्तमश्विनमश्वैरुपेतं तं प्रसिद्धं रयिं त्वदीयं धनं प्रनशीमहि । प्राप्नुयाम । तथा ब्रह्म परिवृढमन्नं च पूर्वचित्तयेऽन्येभ्यः पूर्वमेव ज्ञानाय प्राप्नवाम ॥

॥ अथ दशमी ॥

अहमिद्धि पितुष्परि मेधामृतस्य जग्रभं ।

अहं सूर्य इवाजनि ॥ १०

अहं । इत् । हि । पितुः । परि । मेधां । ऋतस्य । जग्रभं ।

अहं । सूर्यःऽइव । अजनि ॥ १०

पितुः पालकस्य ऋतस्य सत्यस्याबितथस्येंद्रस्य मेधामनुग्रहात्मिकां बुद्धिमहमित् अहमेव परिजग्रभ । परिगृहीतवानस्मि नान्ये । हि यस्मादेवं तस्मादहं सूर्य इवाजनि सूर्यो यथा प्रकाशमानः सन् प्रादुर्भवति तथाजनिषं । प्रादुरभूवं ॥

॥ इति पंचमस्याष्टके दशमो वर्गः ॥

॥ अथैकादशी ॥

अहं प्रत्नेन मन्मना गिरः शुंभामि कण्ववत् ।

येनेंद्रः शुष्ममिद्दधे ॥ ११

अहं । प्रत्नेन । मन्मना । गिरः शुंभामि । कण्वऽवत् ।

येन । इंद्रः । शुष्मं । इत् । दधे ॥ ११

कण्ववत् मम जनकः कण्व इवाहं प्रत्नेन नित्येन वेदरूपेण मन्मना मननसाधनेनेंद्रविषयेण स्तोत्रेण गिरो वाचः शुंभामि । अलंकरोमि यदा ह्यींद्रविषये प्रयुज्यंते तदानीं यथार्थत्वाद्वाचोऽलंकृता भवंति । येन खलु स्तोत्रेणेंद्रः शुष्मं शत्रूणां शोषकं बलं दधे इत् धत्त एव धारयत्येव । यत्स्तोत्रमिंद्र ईदृशं बलमसाध्यं जनयति तेन मन्मनेत्यर्थः ॥

॥ अथ द्वादशी ॥

ये त्वामिंद्र न तुष्टुवुरृषयो ये च तुष्टुवुः ।

ममेद्वर्धस्व सुष्टुतः ॥ १२

ये । त्वां । इंद्र । न । तुस्तुवुः । ऋषयः । ये । च । तुस्तुवुः ।

मम । इत् : वर्धस्व । सुऽस्तुतः ॥ १२

हे इंद्र ये जनास्त्वां न तुष्टुवुः न स्तुवंति । ये च ऋषयो मंत्राणां द्रष्टारो जनास्तुष्टुवुः त्वां स्तुवंति उभयेषां मध्ये ममेत् ममैव स्तोत्रेण सुष्टुतः शोभनं स्तुतः सन् वर्धस्व । वृद्धो भव ॥

॥ अथ त्रयोदशी ॥

यदस्य मन्युरध्वनीद्वि वृत्रं पर्वशो रुजन् ।

अपः समुद्रमैरयत् ॥ १३

यत्। अस्य। मन्युः। अध्वनीत्। वि। वृत्रं। पर्वऽशः।
रुजन्।
अपः। समुद्रं। ऐरयत्॥ १२

अस्येंद्रस्य मन्युः क्रोधो वृत्रमाहत्य तिष्ठंतमसुरं मेघं वा पर्वशः पर्वणि पर्वणि परुषि परुषि विरुजन् विभंजन् यद्यदाध्वनीत् स्तनयित्नुलक्षणं शब्दमकरोत् तदानीं समुद्रं समुंदनीयमुदधिं मत्यपा वृष्ट्युदकान्यैरयत्। स इंद्रः प्रेरितवान्॥

॥ अथ चतुर्दशी ॥

नि शुष्ण इंद्र धर्णसिं वज्रं जघंथ दस्यवि।
वृषा ह्युग्र शृण्विषे॥ १४

नि। शुष्णे। इंद्र। धर्णसिं। वज्रं। जघंथ। दस्यवि।
वृषा। हि। उग्र। शृण्विषे॥ १४

हे इंद्र शुष्णे शोषक एतन्नामके दस्यावुपक्षपयितर्यसुरे धर्णसिं धारयितव्यं वज्रं कुलिशं त्वं निजघंथ। निहतवानसि। वज्रेण तमसुरं न्यवधीरित्यर्थः। हे उग्रोद्गूर्णबलेंद्र वृषा कामानां वर्षितेति हि शृण्विषे श्रूयसे। अतोऽस्मदपेक्षितं धनं देहीति शेषः॥

॥ अथ पंचदशी ॥

न द्याव इंद्रमोजसा नांतरिक्षाणि वज्रिणं।
न विव्यचंत भूमयः॥ १५

न। द्यावः। इंद्रं। ओजसा। न। अंतरिक्षाणि। वज्रिणं।
न। विव्यचंत। भूमयः॥ १५

द्यावो द्युलोका इममिंद्रमोजसा बलेन न विव्यचंत। न व्याप्नुवंति। द्युलोकेभ्योऽप्यस्य बलमधिकमित्यर्थः। तथांतरिक्षाण्यंतराः क्षांतानि द्यावापृथिव्योर्मध्ये वर्तमाना लोका वज्रिणं वज्रवंतमिमं न व्याप्नुवंति। तथा भूमयो भूलोकाश्च तमिंद्रं व्याप्नुवंति। त्रयो वा इमा त्रिवृतो लोका इति ब्राह्मणादेकैकस्य लोकस्य त्रित्वं। तिस्रो भूमीः। ऋग्वे० २. २७. ८.। इत्यादिनिगमाच्च॥

॥ इति पंचमस्याष्टम एकादशो वर्गः॥

## ॥ अथ षोडशी ॥

यस्त इंद्र महीरपः स्तंभूयमान आशयत्।

नि तं पद्यासु शिश्नथः॥ १६

यः। ते। इंद्र। महीः। अपः। स्तभुऽयमानः। आ।

अशयत्।

नि। तं। पद्यासु। शिश्नथः॥ १६

हे इंद्र ते तव संबंधिनीर्मंहीर्महतीरप आंतरिक्ष्याण्युदकानि यो वृत्रः स्तभूयमानः स्तंभयन् यथाधो न पतंति तथा कुर्वन् आशयत् आवृत्याशेत तमसुरं पद्यासु गमनशीलास्वप्सु मध्ये निशिश्नथः। न्यहिंसीः॥ श्नथिर्हिंसार्थः॥ वज्रेण तमसुरं हत्वा नदीषु पातितवानित्यर्थः॥

## ॥ अथ सप्तदशी ॥

य इमे रोदसी मही समीची समजग्रभीत्।

तमोभिरिंद्र तं गुहः॥ १७

यः। इमे इति। रोदसी इति। मही इति।

समीची इति समऽईची। संऽअजग्रभीत्।

तमःऽभिः। इंद्र। तं। गुहः॥ १७

ये इमे महती महत्यौ विस्तीर्णे समीची संगते इमे प्रत्यक्षत उपलभ्यमाने रोदसी द्यावापृथिव्यौ समजग्रभीत् सम्यगग्रहीत्। आवृणोदित्यर्थः। तमसुरं हे इंद्र त्वं तमोभिरंधकारैर्गूढः। संवृतमकरोः। अनाद्यनंतं मरणलक्षणं तमः प्रावेशय इत्यर्थः॥

॥ अथाष्टादशी ॥

य इंद्र यतंयस्त्वा भृगंवो ये चं तुष्टुवुः।

ममेदुग्र श्रुधी हवं॥ १८

ये। इंद्र। यतंयः। त्वा भृगंवः। ये। च। तुस्तुवुः।

मम। इत्। उग्र। श्रुधि। हवं॥ १८

हे इंद्र ये यतयो नियता अंगिरसस्त्वां तुष्टुवुः। ये च भृगवो भृगुगोत्रास्त्वां तुष्टुवुः स्तुवंति तेषु मध्ये ममेत् ममैव हवं स्तोत्रं हे उग्रौजस्विन्निंद्र श्रुधि। शृणु॥

॥ अथैकोनविंशी ॥

इमास्तं इंद्र पृश्नंयो घृतं दुंहत आशिरं।

एनामृतस्य पिप्युषीः॥ १९

इमाः। ते। इंद्र। पृश्नंयः। घृतं। दुहते। आऽशिरं।

एनां। ऋतस्यं। पिप्युषीः॥ १९

हे इंद्र ते त्वदीया इमाः पृश्नयः प्राष्टवर्णा गावो घृतं क्षरणशीलमेनामाशिरमा-श्रयणद्रव्यं पयो दुहते दुहंति धारयंति। कीदृश्यः पृश्नयः। ऋतस्य सत्यस्याविनश्व-रस्येंद्रस्य यज्ञस्य वा पिप्युषीर्वर्धयित्र्यः।

॥ अथ विंशी ॥

या इंद्र प्रसंस्त्वासा गर्भमचंक्रिरन्।

परि धर्मेव सूर्यं॥ २०

याः । इंद्र । प्रऽस्वः । त्वा । आसा । गर्भं । अचक्रिरन् ।

परि । घर्मऽइव । सूर्यं ॥ २०

हे इंद्र प्रस्वः । प्रस्नुवते गर्भं विमुंचंतीति प्रस्वः ॥ स्नातेः सत्सूद्विषेति क्विप् । इंद्रस्य या गाव आसाऽऽस्येन त्वा त्वदीयं वीर्यं वृत्रवधानंतरमोषध्यादिरूपेण परिणतं भक्षयित्वा गर्भमचक्रिरन् अकुर्वन् त्वदीयं वीर्यमंतरधारयन् । तत्र दृष्टांतः । सूर्यं परितः सूर्यमंडलस्योपरि घर्मेव धारकं पोषकमुदकं यथा रश्मयो गर्भरूपेण बिभ्रति तद्वत् । यद्वा पति घर्मेव परितो धारयितारं सूर्यमिव । यथा सूर्यः परितः सर्वं जगद्धत्ते तद्वत् । कृत्स्नस्य जगतो धारकमिंद्रस्य वीर्यमित्यर्थः । ओषध्यादिरूपेण परिणतस्येंद्रवीर्यस्य गोभिरात्मनि धारणमिंद्रस्य वृत्रं जघ्नुष इत्यारभ्य तैत्तिरीयके विस्पष्टमाम्नातं । तत्पशव ओषधीभ्योऽध्यात्मन समनयन् तत्प्रत्यदुहन्निति । पयोरूपेण परिणतं तद्वीर्यमिमा गाव आशिरार्थं दुहंत इति पूर्वस्यामृच्यन्वयः ॥

॥ इति पंचमस्याष्टमे द्वादशो वर्गः ॥

वाजपेयेऽतिरिक्तोक्थे त्वामिच्छवसस्पत इत्येषा । सूत्रितं च । त्वामिच्छवसस्पत इति संप्रतया । आ० ६. ६. । इति ॥

॥ सैषैकविंशी ॥

त्वामिच्छवसस्पते कण्वा उक्थेन वावृधुः ।

त्वां सुतास इंदवः ॥ २१

त्वां । इत् । शवसः । पते । कण्वाः । उक्थेन । ववृधुः ।

त्वां । सुतासः । इंदवः ॥ २१

हे शवसस्पते बलस्य स्वामिन्निंद्र त्वामेव कण्वाः स्तोतारः कण्वगोत्रा वा ऋषय उक्थेन शस्त्रेण ववृधुः । वर्धयंति । सुतासोऽध्वर्युभिरभिषुता इंदवः सोमाश्च त्वामेव वर्धयंति ॥

॥ अथ द्वाविंशी ॥

त्वेदिंद्र प्रणीतिषूत प्रशंस्तिरद्रिवः ।

यज्ञो वितंतसाय्यः ॥ २२

त्वे । इत् । इंद्र । प्रऽनीतिषु । उत । प्रऽशंस्तिः । अद्रिऽवः ।

यज्ञः । विऽतंतसाय्यः ॥ २२

उतापि च हे अद्रिवः । आहणात्यनेनेत्यद्रिर्वज्रः । तद्वन्निंद्र त्वेत् त्वेव प्रणीतिषु प्रकृष्टेषु नयनेषु धनप्रदानेषु खलु प्रशस्ति प्रकृष्टा स्तुतिः क्रियते। तथा वितंतसाय्यो विस्तृततमः॥ तनोतेर्म्कादसःसमतद्रूपं । यद्वा तंतसिः कंड्वादिर्यक्प्रत्ययः । तस्मादौणादिक आय्यप्रत्ययः ॥ महान् यज्ञश्च त्वेव क्रियते ॥

॥ अथ त्रयोविंशी ॥

आ नं इंद्र महीमिषं पुरं न दर्षि गोमंतीं ।

उत प्रजां सुवीर्यं ॥ २३

आ । नः । इंद्र ॥ महीं । इषं । पुरं । न । दर्षि । गोऽमंतीं ।

उत । प्रऽजां । सुऽवीर्यं ॥ २३

हे इंद्र नोऽस्मभ्यमस्मदर्थं महीं महतीं गोमतीं गोभिर्युक्तामिषमन्नमादर्षि । आदियस्व । दातुं कामयस्व । नशब्दस्यार्थे । पुरं न । पालनं पूः । पालनं रक्षणं चास्मभ्यं कर्तुमाद्रियस्व ॥

॥ अथ चतुर्विंशी ॥

उत त्यदाश्वश्व्यं यदिंद्र नाहुषीष्वा ।

अग्रे विक्षु प्रदीदयत् ॥ २४

उत । त्यत् । आशुऽअश्व्यं । यत् । इंद्र । नाहुषीषु । आ ।

ऋग्रे । विक्षु । प्रऽदीदयत् ॥ २४

हे इंद्र नाहुषीषु । नहुषा इति मनुष्यनाम । तत्संबंधिनीषु । यद्वा नाहुषो नाम कश्चिद्राजा । तदीयासु विक्षु प्रजासु अग्रे पुरस्ताद्यदाशुअश्व्यं शीघ्रगाम्यश्वसंघात्मकं बलं प्रदीदयत् प्रादीप्यत उतापि च त्यत्तदप्यस्मभ्यं देहीति शेषः । आकारः पूरकः ॥

॥ अथ पंचविंशी ॥

अभि व्रजं न तत्निषे सूर उपाकचक्षसं ।

यदिंद्र मृळयासि नः ॥ २५

अभि । व्रजं । न । तत्निषे । सूरः । उपाकऽचक्षसं ।

यत् । इंद्र । मृळयासि । नः ॥ २५

न संप्रत्यर्थे । न संप्रतीदानीं हे इंद्र सूरः प्राज्ञस्त्वं व्रजं गोष्ठमुपाकचक्षसं । उपाक इत्यंतिकनाम । अंतिके द्रष्टव्यमभितत्निषे । अभितनोषि । अभिविस्तारयसि । गोभिः पूर्णं करोषीत्यर्थः ॥ तनोतेश्छांदसे लिटि तिनिपत्योश्छंदसीत्युपधालोपः । यद्यदा हे इंद्र त्वं नोऽस्मान् मृळयासि मृळयसि सुखयसि ॥

॥ इति पंचमस्याष्टमे त्रयोदशो वर्गः ॥

॥ अथ षड्विंशी ॥

यदंग तविषीयस इंद्रं प्रराजसि क्षितीः ।

महाँ अपार ओजसा ॥ २६

यत् । अंग । तविषीऽयसे । इंद्र । प्रऽराजसि । क्षितीः ।

महान् । अपारः । ओजसा ॥ २६

अंगेत्यभिमुखीकरणे। हे इंद्र यत् यस्त्वं तविषीयसे। तविषीति बलनाम। बलमिवाचरसि। इत्यत्र त्वयादिकं बलं यथासीं बलज तं भनक्ति तद्वत्तमसह्या एव सन् सर्वमेव बलजातं भारयसीत्यर्थः। यस्त्वं चितीः मनुष्यनामैतत्। मनुष्यान् पराभवसि प्रकर्षेणाभिभवसि॥ राजसिद्व्यवंकर्मा॥ अत्रापि यद्वृत्तयोगादनिघातः॥ स इंद्र ओजसा बलेन महान् सर्वेभ्योऽधिकः। अत एवापारः पाररहितः केनाप्यवसानं प्रापयितुमशक्य इत्यर्थः॥

॥ अथ सप्तविंशी॥

तं त्वा हविष्मतीर्विश उपं ब्रुवत ऊतयें।

उरुज्रयसमिंदुभिः॥ २७

तं। त्वा। हविष्मतीः। विशः। उपं। ब्रुवते। ऊतयें।

उरुऽज्रयसं। इंदुऽभिः॥ २७

हे इंद्र तं पूर्वोक्तगुणमुरुज्रयसं विस्तीर्णवेगं त्वा हविष्मतीर्हविर्भिश्चरुपुरोडाशादिभिर्युक्ता विशः प्रजा उप ब्रुवते। उपेत्य स्तुवंति। किमर्थं। इंदुभिः सोमै-रूतये तर्पणाय। यद्वेंदुभिः सोमैरुरुज्रयसं त्वा ...भूतये रक्षणाय स्तुवंति॥

॥ अथाष्टाविंशी॥

उपह्वरे गिरीणां संगथे च नदीनां।

धिया विप्रो अजायत॥ २८

उपऽह्वरे। गिरीणां। संऽगथे। च। नदीनां।

धिया। विप्रः। अजायत॥ २८

गिरीणां पर्वतानामुपह्वरे उपह्वर्तव्ये प्रांते नदीनां सरितां संगने संगमे च। ईदृग्विधे देशे क्रियमाणया धिया यागक्रियया स्तुत्या वा विप्रो मेधावींद्रोऽजायत। प्रादुर्भवति। अतो वयमपि तादृशे देशे यजामः स्तुमो वेति भावः॥ गिरीणामित्यत्र नामन्यतरस्यामिति नाम उदात्तत्वं॥

॥ अथैकोनत्रिंशी ॥

अतः समुद्रमुद्वतश्चिकित्वाँ अव पश्यति ।

यतो विपान एजति ॥ २९

अतः । समुद्रं । उत्ऽवतः । चिकित्वान् । अव । पश्यति ।

यतः । विपानः । एजति ॥ २९

यतो यस्मिन् द्युलोके विपानो व्याप्नुवन् विशिष्टपानयुक्तो वेंद्र एजति चेष्टते उद्वत उद्गतात् ॥ उपसर्गाच्छंदसि धात्वर्थे इति वतिः ॥ अतोऽस्माद्युलोकात् चिकित्वान् जानन् स इंद्रः समुद्रं समुंदनशीलं यजमानैर्दीयमानं सोममवपश्यति । अवाङ्मुखः सन् ईक्षते । यद्वा सूर्यात्मनेंद्रः स्तूयते । यस्मिन्नभसि विपानो व्याप्नुवन् सूर्यात्मेंद्र एजति वर्तते चिकित्वान् जानन् विद्वान्वा स इंद्र उद्वत उद्गतादतोऽस्मा-दंतरिक्षात्समुद्रं । उपलक्षणमेतत् । समुद्रोपलक्षितं सर्वं जगदवपश्यति । अवाङ्मुखं प्रसृतैः किरणैः प्रकाशयति ॥

॥ अथ त्रिंशी ॥

आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यंति वासरं ।

परो यदिध्यते दिवा ॥ ३०

आत् । इत् । प्रत्नस्य । रेतसः । ज्योतिः । पश्यंति । वासरं ।

परः । यत् । इध्यते । दिवा ॥ ३०

परो दिवा दिवः परस्तात् द्युलोकस्योपरि यद्यदायमिंद्रः सूर्यात्मनेध्यते दीप्यते आदिदनंतरमेव प्रत्नस्य चिरंतनस्य रेतसो गंतुः ॥ री गतिरेषणयोः । अस्मात् सुरीभ्यां तुट् चेत्यसुन् तुडागमश्च ॥ यद्वा रेत इत्युदकनाम । रेतस्विन उदकवतः । सोमस्यान्न त्वर्थो लक्ष्यते । ईदृशस्येंद्रस्य सूर्यात्मनो वासरं निवासकं वासरस्य निवासस्य हेतुभूतं वा ज्योतिर्द्योतमानं तेजः पश्यंति सर्वे जनाः । यद्वा वासरमित्यत्यंतसंयोगे द्वितीया । अहस्समग्रमुदयप्रत्यस्तमयनं यावत् ज्योतिष्पश्यंतीत्यर्थः ॥ इदुदुपधस्य चाप्रत्ययस्येति विसर्जनीयस्य षत्वं ॥

॥ इति पंचमस्याष्टमे षड्विंशो वर्गः ॥

॥ अथैकत्रिंशी ॥

कण्वास इंद्र ते मतिं विश्वे वर्धंति पौंस्यं ।

उतो शविष्ठ वृष्ण्यं ॥ ३१

कण्वासः । इंद्र । ते । मतिं । विश्वे । वर्धंति । पौंस्य ॥

उतो इति । शविष्ठ । वृष्ण्यं ॥ ३१

हे इंद्र ते त्वदीयां मतिं बुद्धिं पौंस्यं । बलनामैतत् । बलं च विश्वे सर्वे कण्वासः कण्वाः स्तोतारः कण्वगोत्रा वा ऋषयो वर्धति । वर्धयंति ॥ छंदस्युभयथेति शप आर्धधातुकत्वात् णेरनिटीति णिलोपः ॥ उतो अपि च हे शविष्ठ अतिशयेन बलवत्तम ॥ विन्मतोर्लुक् । टेरिति टिलोपः ॥ हे इंद्र वृष्ण्यं त्वदीयं वीर्यं बलकर्म च कण्वास्ते वर्धयंत्येव ॥

॥ अथ द्वात्रिंशी ॥

इमां म इंद्र सुष्टुतिं जुषस्व प्र सु मामव ।

उत प्र वर्धया मतिं ॥ ३२

इमां । मे । इंद्र । सुऽस्तुतिं । जुषस्व । प्र । सु । मां । अव ।

उत । प्र । वर्धय । मतिं ॥ ३२

हे इंद्र इमां पुरोवर्तिनीं मे मदीयां सुष्टुतिं शोभनां स्तुतिं जुषस्व । सेवस्व । सेवित्वा च स्तोतारं मां सु शोभनं प्राव । प्रकर्षेण रक्ष । उतापि च मतिमस्मदीयां बुद्धिं प्रवर्धय । प्रवृद्धां कुरु । यथा वह्वर्थदर्शिनी भवति तथा कुर्वित्यर्थः ॥

॥ अथ त्रयस्त्रिंशी ॥

उत ब्रह्मण्या वयं तुभ्यं प्रवृद्ध वज्रिवः ।

विप्रा अतक्ष्म जीवसे ॥ ३३

उत । ब्रह्मण्या । वयं । तुभ्यं । प्रऽवृद्ध । वज्रिऽवः ।

विप्राः । अतक्ष्म । जीवसे ॥ ३३

उतापि च हे प्रवृद्ध स्तुतिभिः प्रवृद्धिं प्राप्त हे वज्रिवो वज्रवन्निन्द्र ॥ रुको मत्वर्थीयोऽनुवादः । यद्वा वज्रोऽस्यास्तीति वज्री इन्द्रः । तद्वान् । छंदसीर इति मतुपो वत्वं । मतुवसो रुरिति मकारस्य रुत्वं ॥ हे इन्द्र तुभ्यं त्वदर्थं विप्रा मेधाविनो ब्रह्मण्या ब्रह्माणि स्तोत्राणि हविर्लक्षणान्यन्नानि वा ॥ सुपां सुलुगिति सुपो याजादेशः ॥ जीवसे जीवनार्थमतक्ष्म । अकार्ष्म ॥ तक्षू तनूकरणे लङि छांदसः शपो लुक् ॥

॥ अथ चतुस्त्रिंशी ॥

अभि कण्वा अनूषतापो न प्रवता यतीः ।

इन्द्रं वनन्वती मतिः ॥ ३४

अभि । कण्वाः । अनूषत । आपः । न । प्रऽवता । यतीः ।

इन्द्रं । वनन्ऽवती । मतिः ॥ ३४

कण्वाः कण्वगोत्रा ऋषयोऽभ्यनूषत । इन्द्रमभिष्टुवंति ॥ नू स्तुतौ । कुटादिः ॥ प्रवता प्रवणेन मार्गेण यतीर्गच्छंत्य आपो न आप इव वतिर्मननीया कण्वैः क्रियमाणा स्तुतिः स्तुत्यमिन्द्रं वनन्वती संभजनवती भवति ॥

॥ अथ पंचत्रिंशी ॥

इन्द्रमुक्थानि वावृधुः समुद्रमिव सिंधवः ।

अनुत्तमन्युमजरं ॥ ३५

इन्द्रं । उक्थानि । ववृधुः । समुद्रंऽइव । सिंधवः ।

अनुत्तऽमन्युं । अजरं ॥ ३५

उक्थानि शस्त्राण्युक्थशस्त्राभिः शस्यमानानींद्रं कामाः । वर्धयंति । सिंधवः स्यंदनशीला नद्यः समुद्रमिव समुद्रं जलधिं यथा वर्धयंति तद्वत् । कीदृशमिंद्रं । अनुत्तमन्युं । अनुत्तोऽप्रेरितः परैरनभिभूतो मन्युः क्रोधो यस्य तादृशं ॥ नुदविदोन्देत्यादिना । पा० ८. २. ५६. । विकल्पितत्वान्निष्ठानत्वाभावः ॥ अजरं जरारहितं ॥ बहुव्रीहौ नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं ॥

॥ इति पंचमस्याष्टमे पंचदशो वर्गः ॥

॥ अथ षट्त्रिंशी ॥

आ नो याहि परावतो हरिभ्यां हर्यताभ्यां ।

इममिंद्र सुतं पिब ॥ ३६

आ । नः । याहि । पराऽवतः । हरिऽभ्यां । हर्यताभ्यां ।

इमं । इंद्र । सुतं । पिब ॥ ३६

हे इंद्र परावतः परागतात् दूरे वर्तमानात् द्युलोकाद्धर्यताभ्यां कांताभ्यां हरिभ्यामश्वाभ्यां नोऽस्माना याहि । आगच्छ । आगत्य चेममस्मदीयं सुतमभिषुतं सोमं पिब ॥

॥ अथ सप्तत्रिंशी ॥

त्वामिद्वृत्रहंतम जनासो वृक्तबर्हिषः ।

हवंते वाजसातये ॥ ३७

त्वां । इत् । वृत्रहन्ऽतम । जनासः । वृक्तऽबर्हिषः ।

हवंते । वाजऽसातये ॥ ३७

हे वृत्रहंतम अतिशयेन वृत्राणामसुराणां शत्रूणां हंतस्त्वामित्त्वामेव वृक्तबर्हिषः । वृक्तं यागार्थं छिन्नं बर्हिर्यैस्तथाविधोक्ताः प्रवृत्तयज्ञा जनासो जना ऋत्विजस्तथा हवंते । आह्वयंति ॥ ह्वेञः । बहुलं छंदसीति संप्रसारणं ॥ किमर्थं । वाजसातये वाजस्यान्नस्य बलस्य वा सातये लाभाय । यद्वा संग्रामनाम वा । वाजस्य सातिर्यस्मिन् संग्रामे तत्र साहाय्याय त्वामाह्वयंतीत्यर्थः ॥

॥ अष्टात्रिंशी ॥

अनु त्वा रोदसी उभे चक्रं न वर्त्येतशं ।

अनु सुवानास इंदवः ॥ ३८

अनु । त्वा । रोदसी इति । उभे इति । चक्रं । न । वर्ति ।

एतशं ।

अनु । सुवानासः । इंदवः ॥ ३८

हे इंद्र त्वा त्वाहुते रोदसी द्यावापृथिव्यावनुवर्तेते । त्वदधीने भवत इत्यर्थः । तत्र दृष्टांतः । चक्रं न । यथा रथचक्रमेतशं । अश्वनामैतत् । पुरो गच्छंतमश्वमनुवर्ति अनुवर्तते तद्वत् । अपि च सुवानास ऋत्विग्भिरभिषूयमाणा इंदवः सोमाश्च त्वामनुवर्तंते ॥

॥ अथैकोनचत्वारिंशी ॥

मंदस्वा सु स्वर्णर उतेंद्र शर्यणावति ।

मत्स्वा विवस्वतो मती ॥ ३९

मंदस्व । सु । स्वऽनरे । उत । इंद्र । शर्यणाऽवति । मत्स्व ।

विवस्वतः । मती ॥ ३९

उतापि च हे इंद्र शर्यणावति । शर्यणा नाम कुरुक्षेत्रवर्तिनो देशाः । तेषामदूरभवः सरः शर्यणावत् । मध्वादिभ्यश्चेति चातुरर्थिको मतुप् । मतौ बह्वच इति दीर्घः । संज्ञायामिति वत्वं ॥ तस्मिन् सरसि विद्यमाने स्वर्णरे स्वैः ऋत्विग्भिर्नेतव्ये यज्ञे सु सुष्टु मंदस्व माद्य । तृप्तो भव । अपि च विवस्वतः परिचरणवतो यजमानस्य मती मत्या च मत्स्व । मदं प्राप्नुहि ॥ मतिशब्दात्तृतीयायाः सुपां सुलुगिति लुक् । सवर्णदीर्घः ॥

॥ अथ चत्वारिंशी ॥

वावृधान उप द्यवि वृषा वज्र्यरोरवीत् ।

वृत्रहा सोमपातमः ॥ ४०

वावृधानः । उप । द्यवि । वृषा । वज्री । अरोरवीत् ।

वृत्रऽहा । सोमऽपातमः ॥ ४०

वावृधानो वृद्धो वज्री वज्रवान् स एव वृत्रहा वृत्रस्य मेघस्यासुरस्य वा हंता सोमपातमोऽतिशयेन सोमस्य पातेंद्रो वृषोदकानां वर्षिता द्यवि द्युलोकेंऽतरिक्ष उप समीपे यथास्माभिः श्रूयते तथारोरवीत् । भृशं स्तनयित्नु लक्षणं शब्दमकरोत् ।
उप समीपे यथास्माभिः श्रूयते तथारोरवीत् । भृशं स्तनयित्नु लक्षणं शब्दमकरोत् ।
अनेन वज्रहस्तेनेदृशं शब्दमचीकरदित्यर्थः ॥

॥ इति पंचमस्याष्टमे षोडशो वर्गः ॥

॥ अथैकचत्वारिंशी ॥

ऋषिर्हि पूर्वजा अस्येक ईशान ओजसा ।

इंद्र चोष्कूयसे वसु ॥ ४१

ऋषिः । हि । पूर्वऽजाः । असि । एकः । ईशानः । ओजसा ।

इंद्र । चोष्कूयसे । वसु ॥ ४१

हे इंद्र पूर्वजाः सर्वेभ्यो देवेभ्यः पूर्वं जात उत्पन्नः । यद्वा यज्ञेषु प्रथममेव प्रादुर्भूतस्त्वमृषिरतींद्रियद्रष्टा सर्वज्ञः खल्वसि । भवसि । अपि च सर्वेषु देवेषु मध्य एको मुख्य ओजसा बलेनेशान ईश्वरो भवसि । यद्वैकोऽसहाय एव सन् ओजसात्मीयेनैव बलेनेशानः सर्वस्य जगत ईश्वरो भवसि । स त्वं वसु धनं चोष्कूयसे । पुनः पुनः स्तोतृभ्यो ददासि ॥ स्कूञ् आप्रवण इह दानार्थः ॥ तथा चोक्तं चोष्कूयमाण इंद्र भूरि वामं ददर्दिद्र वसु वननीयं । नि० ६, २२, । इति ॥

॥ अथ द्विचत्वारिंशी ॥

अस्माकं त्वा सुताँ उप वीतपृष्ठा अभि प्रयः।

शतं वहंतु हरयः॥ ४२

अस्माकं। त्वा। सुतान्। उप। वीतऽपृष्ठाः। अभि। प्रयः।

शतं। वहंतु। हरयः॥ ४२

हे इंद्र अस्माकमस्मदीयान् सुतानुपलक्ष्य प्रयः। अन्ननामैतत्। धानाकरंभादि-दिहविर्लक्षणमन्नं चाभिलक्ष्य वीतपृष्ठाः प्रयत्नपरिमाणाः शतं शतसंख्याका हरयोऽश्वास्त्वां वहंतु। प्रापयंतु॥

अथ त्रिचत्वारिंशी ॥

इमां सु पूर्व्यां धियं मधोर्घृतस्य पिप्युषीं।

कण्वा उक्थेन वावृधुः॥ ४३

इमां। सु। पूर्व्यां। धियं। मधोः। घृतस्य। पिप्युषीं।

कण्वाः।

उक्थेन। ववृधुः॥ ४३

इमामिदानीं क्रियमाणां सु सुष्ठु पूर्व्यां पूर्वैः पित्रादिभिः कृतां मधोर्मधुरस्य घृतस्य चरणशीलस्योदकस्य पिप्युषीं वर्धयित्रीं। यद्वा मधुरेण घृतेनाज्येन प्रवृद्धां धियं यागक्रियां कण्वाः कण्वगोत्रा ऋषय उक्थेन शस्त्रेण वावृधुः। ऐंद्रीं वर्धयंति। कण्वैर्हि यागो वर्धते। अग्निष्टोमादिषूत्तरासु संख्यासु शस्त्रवृद्धेर्दृष्टत्वात्। यद्वा पूर्व्यां चिरंतनामिमामिंद्रस्य प्रियमनुष्ठानबुद्धिं चरणशीलेन मधुरेण सोमेन पिप्युषीं वर्धनीयामुक्थेन स्तोत्रेण वावृधुः। वर्धयंति॥

॥ अथ चतुश्चत्वारिंशी ॥

इंद्रमिद्विमहीनां मेधे वृणीत मर्त्यः।

इंद्रं सनिष्युरूतये॥ ४४

इंद्रं । इत् । विऽमंहीनां । मेधे । वृणीत । मर्त्यः ।

इंद्रं । सनिष्युः । ऊतये ॥ ४४

विमंहीनां विशेषेण महतां देवानां मध्ये इंद्रमिदिंद्रमेव मेधे यज्ञे मर्त्यो मनुष्यो स्तोता वृणीत। स्तुतिभिः संभजते। तथा सनिष्युर्धनकामश्च स्तोतोतये रक्षणायेंद्रमेव वृणीते। स्तुत्या संभजते॥

॥ अथ पंचचत्वारिंशी ॥

अर्वांचं त्वा पुरुष्टुत प्रियमेधस्तुता हरी ।

सोमपेयाय वक्षतः ॥ ४५

अर्वांचं । त्वा । पुरुऽस्तुत । प्रियमेधऽस्तुता । हरी इति ।

सोमऽपेयाय । वक्षतः ॥ ४५

हे पुरुष्टुत बहुभिः स्तुतेंद्र प्रियमेधस्तुता प्रियमेधैः प्रिययज्ञैर्ऋषिभिः स्तुतौ॥ तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं। सुपां सुलुगित्याकारः॥ ईदृशौ हरी अश्वौ सोमपेयाय सोमपानार्थं त्वामर्वांचमस्मदभिमुखं वक्षतः। वहतां॥

॥ अथ षट्चत्वारिंशी ॥

शतमहं तिरिंदिरे सहस्रं पर्शावा ददे ।

राधांसि याद्वानां ॥ ४६

शतं । अहं । तिरिंदिरे । सहस्रं । पर्शौ । आ । ददे ।

राधांसि । याद्वानां ॥ ४६

शतमादिकेन तृचेन तिरिंदिरस्य राज्ञो दानं स्तूयते। पर्शौ पर्शुनाम्नः पुत्रे॥ उपचाराज्जन्ये जनकशब्दः॥ तिरिंदिर एतत्संज्ञे राजनि याद्वानां। यदुरिति मनुष्यनाम। यदव एव याद्वाः॥ स्वार्थिकस्तद्धितः॥ तेषां मध्येऽहं शतं शतसंख्याकानि सहस्रं सहस्रसंख्याकानि च राधांसि धनान्याददे। स्वीकरोमि। यद्वा याद्वानां यदुकुलजानामन्येषां राज्ञां स्वभूतानि राधांसि बलादपहृतानि तिरिंदिरे वर्तमानान्यहं प्राप्नोमि॥

॥ अथ सप्तचत्वारिंशी ॥

त्रीणि॑ श॒तान्यर्व॑तां स॒हस्रा॒ दश॒ गोना॑म् ।

द॒दुष्प॒ज्राय॒ साम्ने॑ ॥ ४७

त्रीणि॑ । श॒तानि॑ । अर्व॑ताम् । स॒हस्रा॑ । दश॑ । गोना॑म् ।

द॒दुः । प॒ज्राय॑ । साम्ने॑ ॥ ४७

पूर्वस्यामृचि स्वप्रदानकं दानमुक्तं। अधुनान्येभ्योऽप्यृषिभ्यस्तिरिंदिरी बहु दानं दत्तवानित्याह। अर्वतां गंतॄणामश्वानां त्रीणि शतानि गोनां गवां दश दश॰ गुणितानि सहस्रा सहस्राणि च पज्राय स्तुतीनां पार्जकाय साम्न एतत्संज्ञाय ऋषये। यद्वा साम्ने। साम स्तोत्रं। तद्वते पज्राय पज्रकुलजाताय कक्षीवते ददुः। तिरिंदिराख्या राजानो दत्तवंतः॥

॥ अथाष्टाचत्वारिंशी ॥

उदा॑नट्क॒कुहो॒ दिव॒मुष्ट्रा॑ञ्चतु॒र्युजो॒ दद॑त् ।

श्रव॑सा॒ याद्वं॒ जन॑म् ॥ ४८

उत् । आ॒न॒ट् । क॒कुहः॑ । दिव॑म् । उष्ट्रा॑न् । च॒तुः॒ऽयुजः॑ । दद॑त् ।

श्रव॑सा । याद्व॑म् । जन॑म् ॥ ४८

अयं राजा ककुह उच्छ्रितः सन् श्रवसा कीर्त्या दिवं स्वर्गमुदानट्। उत्कृष्टतरं व्याप्नोत्। किं कुर्वन्। चतुर्भुजश्चतुर्भिः स्वर्णभारैर्युक्तानुष्ट्रान् ददत् प्रयच्छन्। तथा याद्वं जनं च दासत्वेन प्रयच्छन्॥

॥ इति पंचमस्याष्टमे सप्तदशो वर्गः ॥

प्र यद्व इति षट्त्रिंशदृचं द्वितीयं सूक्तं कण्वगोत्रस्य पुनर्वत्सस्यार्षं मारुतं गायत्रं। तथा चानुक्रांतं। प्र यद्वः षट्त्रिंशत्पुनर्वत्सो मारुतमिति॥ व्यूढे दशरात्रे प्रथमे छंदोम आग्निमारुतशस्त्र इदं सूक्तं मारुतनिविद्धानं। सूत्रितं च। प्र यद्वस्त्रिष्टुभं दूतं व इत्याग्निमारुतं। आ० ८. ९.। इति॥

॥ तत्र प्रथमा ॥

प्र यद्वस्त्रिष्टुभमिषं मरुतो विप्रो अक्षरत्।

वि पर्वतेषु राजथ ॥ १

प्र। यत्। वः। त्रिऽस्तुभं। इषं। मरुतः। विप्रः। अक्षरत्।

वि। पर्वतेषु। राजथ ॥ १

हे मरुतो मितराविणो मितरोचिनो वा एतत्संज्ञा माध्यमिका देवगणाः ॥ पादादित्वादपादादाविति पैयुंदाम्रादाष्टमिकनिघाताभावे षाष्ठिकमामंत्रिताद्युदात्तत्वं ॥ वो युष्मभ्यं विप्रो मेधावी स्तोता त्रिष्टुभं त्रिषु सवनेषु प्रशस्यां त्रिभिर्देवैः स्तुतां वा। यद्वा त्रिष्टुप्छंदसा संबद्धा माध्यंदिनसवनिकीमिषं सोमलक्षणमन्नं यद्यदा प्राक्षरत् प्रासिंचत् अग्नौ प्राक्षिपत्। यद्वा त्रिष्टुभं त्रिष्टुप्छंदस्कं स्तोत्रमिषं सोमं चेति योज्यं। तदानीं यूयं पर्वतेषु पर्ववत्सु शिलोच्चयेषु वि राजथ। तेन सोमेन लब्धबलाः संतो विशेषेण दीप्ता भवथ ॥

॥ अथ द्वितीया ॥

यदंग तविषीयवो यामं शुभ्रा अचिध्वं।

नि पर्वता अहासत ॥ २

यत्। अंग। तविषीऽयवः। यामं। शुभ्राः। अचिध्वं।

नि। पर्वताः। अहासत ॥ २

हे तविषीयवः। तविषीति बलनाम। तां कामयमानाः। यद्वा बलयुक्ता हे शुभ्राः शोभमाना अंग हे मरुतो यामं। याति गच्छतीति यामो रथः। तं यद्यदाचिध्वं समचिनुध्वं अश्वादिभिः साधनैः संचितं संश्लिष्टं कुरुथ गमनार्थं तदानीं पर्वता गिरयोऽपि न्यहासत। नितरां गच्छंति। युष्मद्रथवेगाद्भीताः संतः स्वस्थानात्प्रचलंति ॥ ओहाङ् गतौ। छांदसो लुङ् ॥

॥ अथ तृतीया ॥

उदीरयंत वायुभिर्वाश्रासः पृश्निमातरः ।

धुक्षंत पिप्युषीमिषं ॥ ३

उत् । ईरयंत । वायुऽभिः । वाश्रासः । पृश्निऽमातरः ।

धुक्षंत । पिप्युषीं । इषं ॥ ३

वाश्रासो वासनशीलाः शब्दकारिणः पृश्निमातरः । पृश्निर्माध्यमिका वाक् । सा माता जननी येषां ते तथोक्ताः ॥ ऋतम्छंदसीति कपः प्रतिषेधः ॥ ईदृशा मरुतो वायुभिः । वांति गच्छंतीति वायवः पृषत्यः । पृषतीभिर्वाहनभूताभिः स्वावयवभूतैर्वायुभिरेव वोदीरयंत । उद्गमयंति मेघादिकं । तथा पिप्युषीं वर्धयित्रीमिषमन्नं च स्तोतृभ्यो धुक्षंत । दुहंति ॥

॥ अथ चतुर्थी ॥

वपंति मरुतो मिहं प्र वेपयंति पर्वतान् ।

यद्यामं यांति वायुभिः ॥ ४

वपंति । मरुतः । मिहं । प्र । वेपयंति । पर्वतान् ।

यत् । यामं । यांति । वायुऽभिः ॥ ४

मरुत एतत्संज्ञा देवा मिहं वृष्टिं वपंति । विकिरंति । विक्षिपंति । तथा पर्वतान् गिरीन् प्रवेपयंति । प्रकंपयंति । अवसरं कुर्वंति चेत् । यद्यदा वायुभिः सार्धं यामं रथं गमनं वा यांति प्राप्नुवंति तदानीमित्यर्थः ॥

॥ अथ पंचमी ॥

नि यद्यामाय वो गिरिर्नि सिंधवो विधर्मणे ।

महे शुष्माय येमिरे ॥ ५

नि । यत् । यामाय । वः । गिरिः । नि । सिंधवः । विऽधर्मणे ।

महे । शुष्माय । येमिरे ॥ ५

हे मरुतो वो युष्माकं यामाय रथाय गमनाय वा गिरिः ॥ सुपां सुलुगिति जसः सुः ॥ गिरयः पर्वता यद्यदा नियेमिरे स्वयमेव नियम्यन्ते । तथा सिंधवः स्यंदनशीलाः समुद्रा नद्यो वा विधर्मणे विधरणाय महे महते शुष्माय शोषकाय युष्मदीयाय बलाय नियेमिरे स्वयमेव नियम्यन्ते । गिरयो नद्यश्च युष्मद्यामाद्बलाच्च भीत्यैकत्रैकस्थाने नियता वर्तंत इत्यर्थः । तदानीं वर्षंति मरुतो मिहमिति शेषः ॥ यमेः कर्मकर्तरि लिट् यद्वृत्तान्नित्यमिति निघातप्रतिषेधः ॥

॥ इति पंचमस्याष्टकस्याष्टादशो वर्गः ॥

॥ अथ षष्ठी ॥

युष्माँ उ नक्तमूतये युष्मान्दिवा हवामहे ।

युष्मान्प्रयत्यध्वरे ॥ ६

युष्मान् । ऊं इति । नक्तं । ऊतये । युष्मान् । दिवा । हवामहे ।

युष्मान् । प्रऽयति । अध्वरे ॥ ६

हे मरुतो युष्माँ उ युष्मानेव नक्तं रात्रावूतये रक्षणार्थं हवामहे । दिवाह्नि च युष्मानेवाह्वयामहे । अध्वरे । ध्वरो नास्त्यत्रेत्यध्वरो यागः ॥ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । यागे प्रयति प्रगच्छति प्रवर्तमाने सति रक्षणार्थं युष्मानेवाह्वयामहे ॥

॥ अथ सप्तमी ॥

उदु त्ये अरुणप्सवश्चित्रा यामेभिरीरते ।

वाश्रा अधि ष्णुना दिवः ॥ ७

उत् । ऊं इति । त्ये । अरुणऽप्सवः । चित्राः । यामेभिः ।

ईरते ।

वाश्राः । अधि । स्नुना । दिवः ॥ ७

त्ये ते पूर्वोक्तगुणा अरुणप्सवोऽरुणवर्णरूपाश्चित्राश्चायनीया आश्चर्यभूता वा वाश्राः शब्दकारिण एवंभूता मरुतो यामेभिर्यामैर्यानैर्दिवोऽधि द्युलोकस्योपरि स्नुना सानुना समुच्छ्रितप्रदेशेनोदीरते । उद्गच्छंति । उ इति पूरणः ॥ पदादिषु मांस्पृत्स्नूनामुपसंख्यानमिति सानुशब्दस्य स्नु भावः ॥

कारीर्यां सौर्यस्य हविषः सृजंति रश्मिमित्येषानुवाक्या । सूत्र्यते हि । सृजंति रश्मिमोजसा वह्निष्टेभिर्विहरन्यासि तंतुं । आ० २. १३. । इति ॥

॥ सैषाष्टमी ॥

सृजंति रश्मिमोजसा पंथां सूर्याय यातवे ।

ते भानुभिर्वि तस्थिरे ॥ ८

सृजंति । रश्मिं । ओजसा । पंथां । सूर्याय । यातवे ।

ते । भानुऽभिः । वि । तस्थिरे ॥ ८

तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । ये मरुतः सूर्याय सूर्यस्य ॥ षष्ठ्यर्थे चतुर्थी वक्तव्येति चतुर्थी ॥ यातवे गंतुं रश्मिं व्याप्तं ॥ अशे रश चेत्यस्मोतेरौणादिको मिप्रत्ययो रशादेशश्च ॥ यद्वा रश्मिभिस्तेजोभिर्युक्तं पंथां पंथानमोजसा बलेन सृजंति उत्पादयंति । वृत्रादिभिरावृतं सूर्यपथमावरकस्य वृत्रादेरपनयनेन जनयंतीत्यर्थः । ते मरुतो भानुभिस्तेजोभिर्वितस्थिरे । कृत्स्नं जगद्व्याप्यावतिष्ठंते ॥

॥ अथ नवमी ॥

इमां मे मरुतो गिरमिमं स्तोमंमृभुक्षणः ।

इमं मे वनता हवं ॥ ९

इमां । मे । मरुतः । गिरं । इमं । स्तोमं । ऋभुक्षणः ।

इमं । मे । वनत । हवं ॥ ९

हे मरुत इमां पुरो वर्तिनीं मे मम गिरं शस्त्ररूपां वाचं वनत । संभजत । हे ऋभुक्षणः । महन्नामैतत् । महांतः ॥ असीतोऽसर्वनामस्थान इत्यकारः । वा षपूर्वस्य निगम इति दीर्घाभावः ॥ ते यूयमिमं स्तोमं स्तोत्रं प्रगीतमंत्रसाध्यं । मे ममेमं पुरो वर्तिनं हवमाह्वानरूपं च याजुषं मंत्रं वनत । संभजत । सेवध्वं ॥

॥ अथ दशमी ॥

त्रीणि सरांसि पृश्नयो दुदुह्रे वज्रिणे मधु ।

उत्सं कवंधमुद्रिणं ॥ १०

त्रीणि । सरांसि । पृश्नयः । दुदुह्रे । वज्रिणे । मधु ।

उत्सं । कवंधं । उद्रिणं ॥ १०

पृश्नयो मरुन्मातृभूता गावो वज्रिणे वज्रवत इंद्राय ॥ तादर्थ्ये चतुर्थी ॥ इंद्रार्थं मधु मधुरं क्षीरादिकमाश्रयणद्रव्यं त्रीणि सरांसि सर इव सोमैः पूरितानि त्रीणि सवनानि त्रिष्वपि सवनेषु श्रयणार्थं दुदुह्रे । दुदुहिरे । यद्वा मधु मधुरं सोमं वज्रिणे वज्रयुक्ताय मरुद्गणाय त्रीणि सरांसि द्रोणकलशाधवनीयपूतभृल्लक्षणानि प्रति पृश्नयो माध्यमिका वाचो दुदुह्रे । वृष्टिद्वारा दुहंति । यद्वा पृश्नत इति मातृवाचिना शब्देन पुत्रा उच्यंते । पृश्निमातरो मरुत इंद्रार्थं त्रीणि सरांसि द्रोणकलशादीनि मधु मधुना सोमेन पूरयितुमुत्सं उत्स्रवणशीलं कवंधमुदकमुद्रिण-मुदकवंतं मेघं दुदुह्रे । दुहते ॥ दुहेश्छांदसो लिट् । इरयो रे इति रेभावः । पादादित्वादनिघातः ॥

॥ इति पंचमस्याष्टम एकोनविंशो वर्गः ॥

॥ अथैकादशी ॥

मरुतो यद्ध वो दिवः सुम्नायंतो हवामहे ।

आ तू न उप गंतन ॥ ११

मरु॑तः । यत् । ह । वः॒ । दि॒वः । सु॒म्न॒ऽयन्तः॑ । हवा॑महे ।

आ । तु । नः॒ । उप॑ । गं॒त॒न॒ ॥ ११

हे मरुतो यद्ध यदा खलु वो युष्मान् सुम्नायंतः सुम्नं सुखमात्मन इच्छंतो वयं दिवो द्युलोकाद्धवामहे स्तुतिभिराह्वयामहे आ तु अनंतरमेव शीघ्रं नोऽस्मानुपगंतन । उपगच्छत ॥ गमेर्लोटि तप्तनप्तनथनाश्चेति तनबादेशः ॥

॥ अथ द्वादशी ॥

यू॒यं हि ष्ठा सु॑दानवो रु॒द्रा॑ ऋभुक्षणो॒ दमे॑ ।

उ॒त प्रचे॑तसो॒ मदे॑ ॥ १२

यू॒यं । हि । स्थ । सु॒ऽदा॒न॒वः॒ । रु॒द्राः॑ । ऋ॒भु॒क्ष॒णः॒ । दमे॑ ।

उ॒त । प्रऽचे॑तसः । मदे॑ ॥ १२

उतापि च हे सुदानवः शोभनदाना हे रुद्रा रुद्रपुत्राः ॥ पादादित्वादामंत्रितनिघाताभावः ॥ हे ऋभुक्षणो महांत उरुतेजस्का वा । ईदृशा हे मरुतो यूयं हि खलु दमे यज्ञगृहे मदे मदकरे सोमे पीते सति प्रचेतसः स्थ । प्रकृष्टज्ञाना भवथ ॥

॥ अथ त्रयोदशी ॥

आ नो॑ र॒यिं म॑द॒च्युतं॑ पुरु॒क्षुं॑ वि॒श्वधा॑यसम् ।

इय॑र्ता मरुतो दि॒वः ॥ १३

आ । नः॒ । र॒यिं । म॒द॒ऽच्युत॑म् । पु॒रु॒ऽक्षुम् । वि॒श्वऽधा॑यसम् ।

इय॑र्त । म॒रु॒तः॒ । दि॒वः ॥ १३

हे मरुतो नोऽस्माकं रयिं धनं दिवो द्युलोकादियर्त । आगमयत ॥ ऋ गतावित्यस्माद्व्यत्ययेन श्लुः । अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्त्वं ॥ लोटि तस्य तप्तनप्तनथनाश्चेति तबादेशः । अनुदात्ते चेत्यभ्यस्तस्याद्युदात्तत्वं ॥ कीदृशं रयिं । मदच्युतं मदं स्रवंतं । यद्वा शत्रूणां मदस्य च्यावयितारं पुरुक्षुं बहुनिवासं बहुभिः स्तूयमानं वा विश्वधायसं विश्वेषां सर्वेषामस्मदीयानां धारणाय पोषणाय पर्याप्तं ॥

॥ अथ चतुर्दशी ॥

अधीव यद्गिरीणां यामं शुभ्रा अचिध्वं ।

सुवानैर्मंदध्व इंदुभिः ॥ १४

अधिऽइव । यत् । गिरीणां । यामं । शुभ्राः । अचिध्वं ।

सुवानैः । मंदध्वे । इंदुऽभिः ॥ १४

हे शुभ्राः शोभमाना मरुतो गिरीणां पर्वतानामधीवोपरीव यद्यदा यामं युष्मदीयं रथमचिध्वं गमनसाधनैरश्वादिभिरुपचितं कुरुथ तदानीं सुवानैरभिषूयमाणैरिंदुभिः सोमैर्मंदध्वे। मादयध्वे ॥

॥ अथ पंचदशी ॥

एतावतश्चिदेषां सुम्नं भिक्षेत मर्त्यः ।

अदाभ्यस्य मन्मभिः ॥ १५

एतावतः । चित् । एषां । सुम्नं । भिक्षेत । मर्त्यः ।

अदाभ्यस्य । मन्मऽभिः ॥ १५

मर्त्यो मनुष्यः स्तोता मन्मभिः स्तोत्रैः सुम्नं सुखं धनं वैषां मरुतां स्वभूतं भिक्षेत। याचेत। इदानीं गणाभिप्रायेणैकवदाह। एतावतश्चित् यत्परिमाणस्य चादाभ्यस्य केनापि हिंसितुमशक्यस्य मरुद्गणस्य सुम्नं भिक्षेत ॥ एतच्छब्दात् यत्तदेतेभ्य इति परिमाणेऽर्थे वतुप् । आ सर्वनाम्न इत्यात्वं ॥

॥ इति पंचमस्याष्टमे त्रिंशो वर्गः ॥

॥ अथ षोडशी ॥

ये द्रप्सा इव रोदसी धमंत्यनु वृष्टिभिः ।

उत्सं दुहंतो अक्षितं ॥ १६

ये। द्रप्साःऽइव। रोदसी इति। धमन्ति। अनु। वृष्टिऽभिः।

उत्सं। दुहन्तः। अक्षितं॥ १६

ये मरुतो द्रप्सा इवोदबिंदव इव रोदसी द्यावापृथिव्यौ वृष्टिभिर्वर्षणैरनुधमंति अनुगच्छंति साकल्येन व्याप्नुवंति। यद्वानुध्माने उच्छूसितावयवे कुर्वति। किं कुर्वंतः। अक्षितमक्षीणमुदकमुत्सं मेघं दुहंतः पूरयंतो मेघादधोमुखं पातयंतः॥ दुहेर्लटः शतृ। लक्षणहेत्वोः। पा० ३. २. १२६.। इति हेतौ शतृप्रत्ययः॥ यत एवं दुहंति अतो रोदसी अनुधमंतीत्यर्थः॥

॥ अथ सप्तदशी ॥

उदु स्वानेभिरीरत उद्रथैरुदु वायुभिः।

उत्स्तोमैः पृश्निमातरः॥ १७

उत्। ऊं इति। स्वानेभिः। ईरते। उत्। रथैः। उत्।

ऊं इति। वायुऽभिः।

उत्। स्तोमैः। पृश्निऽमातरः॥ १७

स्वानेभिः स्वानैः शब्दैर्मरुत उदीरते। उद्गच्छंति॥ स्वन शब्दे। स्वनहसोर्वा। पा० ३. ३. ६२.। इत्यपो विकल्पितत्वात्पक्षे घञ्। कर्षात्वत इत्यंतोदात्तत्वं। बहुलं छंदसीति भिस ऐसभावः। उ इति पूरणः। तथा रथै रथप्रमुखैर्वायुभिश्चो-दीरते। पृश्निमातरः – – –॥

॥ अथाष्टादशी ॥

येनाव तुर्वशं यदुं येन कण्वं धनस्पृतं।

राये सु तस्य धीमहि॥ १८

येन। आव। तुर्वशं। यदुं। येन। कण्वं। धनऽस्पृतं।

राये। सु। तस्य। धीमहि॥ १८

येनात्मीयेन रक्षणेन तुग्रं यमेतस्य त्रं यदुमेतस्य त्रं च राजर्षिणाव यूयं रक्षितवंतः स्थ॥ अवतेर्लिटि मध्यमबहुवचने रूपमेतत्॥ येन च धनस्पृतं धनकामं कण्वस्यर्षिं रक्षितवंतः स्थ तस्य युष्मदीयं रक्षणं राये धनार्थं हु धीमहि। योमनं ध्यायाम॥

॥ अथैकोनविंशी॥

इमा उ वः सुदानवो घृतं न पिप्युषीरिषः।
वर्धान्काण्वस्य मन्मभिः। १९

इमाः। ऊं इति। वः। सुऽदानवः। घृतं। न।
पिप्युषीः। इषः।
वर्धान्। काण्वस्य। मन्मऽभिः॥ १९

हे सुदानवः शोभनदाना मरुतो घृतं न घृतमिव पिप्युषीर्वर्धयित्र्यः शरीरपुष्टिहेतुभूता इमा इदानीं प्रदीयमाना इषोऽन्नानि शोभनलक्षणानि काण्वस्य कण्वगोत्रस्य मम संबंधिभिर्मन्मभिः स्तोत्रैः सार्धं वो युष्मान् वर्धान् वर्धयंतु॥ वृधेर्लेटि रूपमेतत्। उ इति पूरणः॥

॥ अथ विंशी॥

क्व नूनं सुदानवो मदथा वृक्तबर्हिषः।
ब्रह्मा को वः सपर्यति॥ २०

क्व। नूनं। सुऽदानवः। मदथ। वृक्तऽबर्हिषः।
ब्रह्मा। कः। वः। सपर्यति॥ २०

मरुदागमनस्य विलंबमसहमान ऋषिरनया वितर्कयति। सुदानवः शोभनदाना हे वृक्तबर्हिषः। वृक्तं छिन्नं बर्हिर्यैर्यागाय। यद्वा बर्हिरिति जलनाम। वृक्तः प्रवृक्तो यज्ञो येषां ते तथोक्ताः। हे ईदृशा मरुतः क्व कुत्र देशे

नूनमिदानीं मदथ। माद्यथ ॥ मदी हर्षे। व्यत्ययेन शप् ॥ कश्च ब्रह्मा ब्राह्मणः स्तोता वो युष्मान् सपर्यति। परिचरति। किंकारणं यूयं स्तुतैरपि अर्वाङ्गुखा इदानीं नागच्छत इति न जानीमः ॥

॥ इति पंचमस्याष्टम एकविंशो वर्गः ॥

॥ अथैकविंशी ॥

नहि ष्म यद्ध वः पुरा स्तोमेभिर्वृक्तबर्हिषः ।

शर्धाँ ऋतस्य जिन्वथ ॥ २१

नहि । स्म । यत् । ह । वः । पुरा । स्तोमेभिः । वृक्तऽबर्हिषः ।

शर्धान् । ऋतस्य । जिन्वथ ॥ २१

पूर्वया वितर्क्येदानीं निश्चिनोति। हे वृक्तबर्हिषः प्रवृक्तयज्ञका मरुतो नहि स्म तत्र खलु संभवति। वो यूयं पुराऽत्तः पूर्वमेव कृतैः स्तोमैरन्यदीयैः स्तोत्रैर्ऋतस्योदकस्य सत्यस्य यज्ञस्य वा संबंधिनः शर्धानात्मीयानि बलानि जिन्वथ प्रीणयथेति यद्ध यत्खलु तत्र संभवत्येव। अतः शीघ्रमागच्छतेत्यर्थः। यद्वा वृक्तबर्हिष इत्यृत्विङ्नाम। हे ऋत्विजः वो युष्माकं संबंधिभिः स्तोमेभिः स्तोत्रैर्ऋतस्य यज्ञस्य संबंधिनो यागार्हान् शर्धान् मारुतानि बलानि पुराऽन्येभ्यः स्तोतृभ्यः पूर्वं नहि स्म न खलु यद्यस्मात्कारणात् जिन्वथ यूयं प्रीणयथ ॥ जिविः प्रीणनार्थः ॥ तस्मादन्यदीयैः स्तोत्रैस्ते मरुतो वशीभवंतीत्यर्थः ॥

प्रवर्ग्ये महावीरे पयसोरासिक्तयोः सतोः समु त्ये महतीरप इत्येषानुवक्तव्या सूत्रितं हि। आसिक्तयोः समु त्ये महतीरप इति महावीरमादायोत्तिष्ठन्तु। आ० ४. ७. । इति ॥

॥ सैषा द्वाविंशी ॥

समु त्ये महतीरपः सं क्षोणी समु सूर्यम् ।

सं वज्रं पर्वशो दधुः ॥ २२

सं। ऊं इति। त्ये। मरुतीः। अपः। सं। क्षोणी इति।

सं। ऊं इति। सूर्यं।

सं। वज्रं। पर्वऽशः। दधुः॥ २२

त्ये ते पूर्वोक्तगुणा मरुतो मरुत्वतीर्बह्वीरपो वृष्ट्युदकानि समु दधुः संदधति। ओषध्यादिभिः संयोजयंति। यद्वा घर्मकाले सूर्यरश्मिभिराहृता उपरि सम्यग्धारयंति॥ इडन्मरुतोरुपसंख्यानमिति मरुतः परस्य ङीप उदात्तत्वं। ऊडिदमित्यादिनाप्शब्दात्परः शस उदात्तः॥ तथा क्षोणी क्षोण्यौ द्यावापृथिव्यौ च ते मरुतः संदधुः। यथा स्वे स्वे स्थानेऽवतिष्ठेते तथा धारयंति। सूत्रात्मना वायुना सर्वं जगद्धार्यते। तथा च श्रूयते। वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः सर्वाणि च भूतानि संदृब्धानि भवंति। बृहदा० उ० ६. ७. २.। इति। तथा सूर्यं सर्वस्य प्रेरकमादित्यं चांतरिक्षे सं दधुः। सम्यग्धारयंति। उशब्दः समुच्चये। ईदृशास्ते मरुतो वज्रमात्मीयमायुधं पर्वशः पर्वणि पर्वणि वृत्रस्य सर्वेष्ववयवसंबंधिषु हननार्थं संदधुः। समयूयुजन्॥

॥ अथ त्रयोविंशी ॥

वि वृत्रं पर्वशो ययुर्वि पर्वताँ अराजिनः।

चक्राणा वृष्णि पौंस्यं॥ २३

वि। वृत्रं। पर्वऽशः। ययुः। वि। पर्वतान्। अराजिनः।

चक्राणाः। वृष्णि। पौंस्यं॥ २३

अराजिनो राज्ञा केनचित्स्वामिनानधिष्ठिताः। यद्वा राजा स्वाम्यस्य न विद्यत इत्यराजेंद्रः। तद्युक्ता वृष्णि वीर्यवत्पौंस्यं बलं चक्राणाः कुर्वाणा मरुतो वृत्रमावरकमसुरं मेघं वा पर्वशः पर्वणि पर्वणि भेदेन वि ययुः। विशिष्टं वधम- अगमयन्। तथा पर्वतान् गिरींश्च विशिष्टं वधं प्रापयन्॥

॥ अथ चतुर्विंशी ॥

अनु त्रितस्य युध्यतः शुष्ममावन्नुत क्रतुम् ।
अन्विंद्रं वृत्रतूर्ये ॥ २४

अनु । त्रितस्य । युध्यतः । शुष्मम् । आवन् । उत । क्रतुम् ।
अनु । इंद्रं । वृत्रऽतूर्ये ॥ २४

त्रितस्याप्यस्यैतत्संज्ञस्य युध्यतः शत्रून् संप्रहरतो राजर्षेः शुष्मं परेषां शोषकं बलं मरुतोऽन्वावन् । आप्याय्यार्थमन्वगच्छन् । अद्यानुगुणमरचन् । उतापि च क्रतुं मदीयं कर्म चारयन् । अपि च वृत्रतूर्ये वृत्रवधार्थे संग्रामे इंद्रं चाप्यायन् । अरचन् ॥

॥ अथ पंचविंशी ॥

विद्युद्धस्ता अभिद्यवः शिप्राः शीर्षन्हिरण्ययीः ।
शुभ्रा व्यंजत श्रिये ॥ २५

विद्युत्ऽहस्ताः । अभिऽद्यवः । शिप्राः । शीर्षन् । हिरण्ययीः ।
शुभ्राः । वि । अंजत । श्रिये ॥ २५

विद्युद्धस्ता विद्योतमानायुधवाहवोऽभिद्यवोऽभिगतदीप्तयः शुभ्रा शोभमाना मरुतः शीर्षन् शीर्षणि शिरस्यात्मीयेषु शिरःसु हिरण्ययीर्हिरण्मयीः स्वर्णमयानि शिप्राः शिरस्त्राणानि श्रिये शोभार्थं व्यंजत । व्यंजयंति । व्यक्तीकुर्वंति । धारयंतीत्यर्थः ॥

॥ इति पंचमस्याष्टमे द्वाविंशो वर्गः ॥

॥ अथ षड्विंशी ॥

उशना यत्परावत उक्ष्णो रंध्रमयातन ।
द्यौर्न चक्रदद्भिया ॥ २६

उशना॑ । यत् । प॒रा॒ऽवतः॑ । उ॒क्ष्णः । रंध्र॑म् । अया॑तन ।

द्यौः । न । च॒क्र॒द॒त् । भि॒या ॥ २६

हे मरुत उशनाः ॥ व्यत्ययेन प्रथमा ॥ उशनसा काव्येन ऋषिणा स्तूयमाना यूयं ॥ यद्वोशनस शब्दात्सुपां सुलुगिति जसः सुः ॥ उशनसः स्तोतॄन् कामयमाना यूयमसक्ता सन्तः कामानां वर्षितुरात्मीयस्य रथस्य दक्षिणतोरंतरिक्षस्य वा रंध्रं श्रेष्ठं परावतो दूरदेशाद्यद्यदायातन आगच्छत ॥ यातेर्लङि मध्यमबहुवचनस्य तप्तनप्तनथनाश्चेति तनादेशः ॥ तदानीं द्यौर्न । अत्र द्युशब्देन नत्रत्यो जनसंघो लक्ष्यते । द्युलोके वर्तमानो जनसंघ इव पार्थिवमपि सर्वं भूतातं भिया युष्मदेगजनितया भीत्या चक्रदत् । अशब्दयत् अकंपत वा ॥

॥ अथ सप्तविंशी ॥

आ नो॑ म॒खस्य॑ दा॒वनेऽश्वै॒र्हिर॑ण्यपाणिभिः ।

देवा॑स॒ उप॑ गंतन ॥ २७

आ । न॒ । म॒खस्य॑ । दा॒वने॑ । अश्वैः॑ । हिर॑ण्यपाणि॒ऽभिः ।

देवा॑सः । उप॑ । गं॒त॒न ॥ २७

हे देवासो दानादिगुणयुक्ता मरुतो नोऽस्माकं मखस्य यज्ञस्य दावने दानाय ॥ ददातेरौणादिको भावे वनिः ॥ हिरण्यपाणिभिः स्वर्णमयपादैः स्वर्णालंकृतैर्हिंसर-हणीयपादैर्वाश्वैरोपगंतन । उपागच्छत । प्राप्नुत ॥ गमेर्लोटि छांदसः शपो लुक् । तप्तनप्तनथनाश्चेति तनबादेशः । अत एव ङित्त्वाभावादनुनासिकलोपो न क्रियते ॥

॥ अथाष्टाविंशी ॥

यदे॑षां॒ पृष॑ती॒ रथे॒ प्रष्टि॒र्वह॑ति॒ रोहि॑तः ।

यांति॑ शु॒भ्रा रि॒णन्न॒पः ॥ २८

यत् । ए॒षा॒म् । पृष॑तीः । रथे॑ । प्रष्टिः॑ । वह॑ति । रोहि॑तः ।

यांति॑ । शु॒भ्राः । रि॒णन् । अ॒पः ॥ २८

एषां मरुतां रथे पृषतीः पृषद्भिः श्वेतबिंदुभिर्युक्ता मृग्यो यदा पर्यंति । द्वा च प्रष्टिः प्राशुः शीघ्रगामी । यद्वा प्रमुखे युज्यमानः सन् रोहितः पृषतः पृषद्भि-र्युक्तो मृगो वहति तदनीं शुभ्राः शोभमाना मरुतो यांति । गच्छंति । तेषां गमने च सत्यप उदकानि वृष्टिलक्षणानि रिणन् । अरिणन् । अगच्छन् । सर्वत्र प्रवहंति ॥ री गतिरेषणयोः । क्र्यादिकः । प्वादीनां ह्रस्वः । छांदसोऽडभावः । समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्या इति वचनादत्र पूर्वपदस्य वाक्यांतर-गतत्वात्तिङ्ङतिङ इति निघाताभावः ॥

॥ अथैकानत्रिंशी ॥

सुषोमे शर्यणावत्यार्जीके पस्त्यावति ।

ययुर्निचक्रया नरः ॥ २९

सुऽसोमे । शर्यणाऽवति । आर्जीके । पस्त्यऽवति ।

ययुः । निऽचक्रया । नरः ॥ २९

सुषोमे शोभनसोमयुक्ते आर्जीके । ऋजीका नाम देशः । तत्संबंधिनि शर्यणावति कुरुक्षेत्रस्य जघनार्धे शर्यणावत् सरसि पस्त्यावति । गन्तव्यकं गृहनाम । यज्ञगृहोपेते सोमपानाय नरो नेतारो मरुतो निचक्रया नीचीनचक्रयावाङ्मुखं प्रवर्तमानया रथकक्ष्यया ययुः । यांति । गच्छंति ॥ यातेश्छांदसो लिट् ॥ यद्वा नरो नेतार ऋत्विज उक्तगुणविशिष्टे शर्यणावति मरुद्यागाय सोमभाहर्तुं निचक्रया नीचीनचक्रया शकट्या ययुः । गच्छंति ॥

॥ अथ त्रिंशी ॥

कदा गच्छाथ मरुत इत्था विप्रं हवमानं ।

मार्डीकेभिर्नाधमानं ॥ ३०

कदा । गच्छाथ । मरुतः । इत्था । विप्रं । हवमानं ।

मार्डीकेभिः । नाधमानं ॥ ३०